तिथ्यः पंचदशघटिकायुक्तोनाः यदासध्यरेखातः प्राक्योजनानितदायुक्ताः यदातुप्राग्योजनानितदोनाः कार्याः अथयद्दिनेवारप्रवृत्तिरिष्टातद्दिवसेयद्दिनार्द्धं
चरपलयुतहीनानाडिका पंचचंद्राइत्यादिप्रकारसिद्धम् तस्माद्दिनार्धात्संस्कार विशिष्टाः पंचदशऊनाधिकाश्चेद्भवंतितदातद्विवरोद्भवैः पलैर्दिनार्धस्यसंस्काररवि
शिष्टपंचदशानांचयद्विवरं अंतरंतत्संबंधेनास्थैरुत्पन्नैः पलैरूर्ध्वंतथाधोदिनयस्यवारस्यप्रवेशः यदासंस्कारविशिष्टाः पंचदशदिनार्धतश्चेदूनास्युस्तदासूर्योद-
याद्ऊर्ध्ववारप्रवृत्तिः यदासंस्कारविशिष्टाः पंचदशदिनार्धतोभ्यधिकास्तदासूर्योदयात्प्राक्वारप्रवृत्तिरित्यर्थः यथावाराणसीरेखाभिधानात् कुरुक्षेत्राख्याक् त्रिषष्टि
योजनानि ६३ पादोनचतुर्भिर्हीनोनानि ४७।१५ प्राग्योजनत्वादेतैः पलैरूनाः पंचदशघटिकाजाताः १४।१३ दिनार्द्धं १६।३० अस्मान्न्यूनादृतिविवर २।१७ ते
माभिर्घटीभिः सूर्योदयादूर्ध्वं वारप्रवृत्तिः यदादिनार्द्धं १३।५० अस्मादधिकादृतिविवरं ०।२३ एताभिर्घटीभिः सूर्योदयात्प्राक्वारप्रवृत्तिरित्यर्थः ५४ अथवारप्र-

**ऊनाधिकास्तद्विवरोद्भवैः पलैरूर्ध्वन्तथाधोदिनपप्रवेशनम् ५४ वारादेर्घटिकाद्विघ्नाःस्वाश्वहृच्छेषवर्जिताः सैकास्तष्ट**
**नगैः कालहोरेशादिनपक्रमात ५५ ॥**

॥वृत्तिप्रयोजनपुरःसरकालहोरामनुष्टुभाह वारादेरिति वारप्रवृत्तिप्रकारेणयस्मिन्क्षणेवा
रप्रवृत्तिर्जातातत इष्टघट्योद्विगुणाः कार्याः तद्विस्थानेस्थाप्याः तत्रपंचभिर्भक्तेयल्लब्धंतेसाज्यस्यच्छेपंतद्विगुणघटीमध्येवर्जितंकार्यं एवंविधाघट्यः सैक
एकयुक्ताः कार्यासप्तभिस्तष्टाअवशिष्टाःकालहोरेशाःस्युः नेदिनपात्वारात्क्रमात्गणनीयाः यथा रविवारेइष्टघटिकाः ६। द्विगुणाः १२ पंचभक्ताः ५ तच्छे
ष २ वर्जिताः १० सैका ११ नगैः ७ स्तष्टाशेषं ४ रविवारेक्रमाद्गणनयाचतुर्थोबुधस्तस्यहोराइत्यादि विवाहवृन्दावनेउदयमारभ्यहोराउक्ताः यथातत्काला
र्केन्यूनलग्नांशपिंडोभक्तःपंचखाणिभिर्भुक्तहोराः भास्वच्छुक्रज्ञेन्दुसौरेज्यभौमाः संख्यायेरन्वारतस्तेतदीशाइति अनयोर्विषयविभागोवसिष्ठसंहिता
यां वारप्रवृत्तिविज्ञानंक्षणवारार्थमेवहि अखिलेष्वन्यकार्येषुदिनादिरुदयाद्भवेत् क्षणवारःकालहोरारूपस्तदर्थंवारप्रवृत्तिः अन्यकार्येषु दिक्षु
संक्रान्तितिथिवारप्रयुक्तेषुवायोगेषुचसूर्योदयादेववारोग्राह्यः ५५ ॥ ५५ ॥ ५५ ॥ ५५ ॥ छ ॥ ॥

अथ कालहोराप्रयोजनं शालिन्याह वारेप्रोक्तमिति यत्कर्म यस्मिन्वारे प्रोक्तं तद्दिनस्य सदोषत्वात्तस्यावश्यकत्वे एतस्य कालहोरायां कर्त्तव्यम् नारदः यस्य खेटस्य यत्कर्म वारे प्रोक्तं विधीयते ग्रहस्य क्षणवारेपि तस्य तत्कर्म सर्वदा अन्ये केचित् यस्य वारे कर्म प्रोक्तं तस्य बलिनो नवांशे सूर्यश्चंद्रो वा चेत्तिष्ठति तत्र तत्कर्मकार्यमित्याहुः उक्तंच यस्य ग्रहेर्दिने कर्म यत्किंचिदभिधीयते यस्यांशस्थिते चंद्रे सूर्ये वा तद्विधीयते इति अथ धिष्ण्ये नक्षत्रे यत्कर्म वस्त्रप रिधानादिकमुक्तं तदत्यावश्यकत्वे अस्य धिष्ण्यस्य स्वामितिथ्यंशके स्वामिनो मुहूर्ते कुर्यात् नारदः यस्मिन्नृक्षे तु यत्कर्म निखिलं कथितं च यत् तद्दै वस्यैतन्मुहूर्ते कार्यं यात्रादिकं न्तथेति मुहूर्तस्वामिनो विवाहप्रकरणे वक्ष्यन्ते क्षणेषु मुहूर्तेषु दिक्शूलादि दिक्शूले वारशूलं नक्षत्रशूलं चिंत्ये विचारणीयं एवं परिघो दंडः क्षणेषु मुहूर्तेषु नैवोल्लंघ्यः दिक्शूलादिकमखिलं परिघदण्डादि विज्ञेयमिति विशेषोक्तेः ५६ अथ मन्वादीन्युगादींश्च शार्दूलविक्रीडितेन

वारेप्रोक्तं कालहोरासु तस्य धिष्ण्ये प्रोक्तं स्वामितिथ्यंशकेऽस्य कुर्याद्दिक्शूलादि चिंत्यं क्षणेषु नैवोल्लंघ्यः पारिघश्चापि दंडः ५६। मन्वाद्याः स्विति थीमधौ तिथिरवीऊर्जे शुचौ दिक्तिथी ज्येष्ठे चैव तिथिस्त्विषे न वतपस्यश्वाः सहस्ये शिवाः भाद्रे ग्निश्च सिते त्वमाष्ट नभसः कृष्णे युगाद्याः सिते गोग्नी बाहुलराधयोर्मदनदर्शौ भाद्रमाघासिते ५७॥

१ नाह मन्वाद्या इति सिते शुक्लपक्षे एता मन्वादयः मधौ चैत्रे त्रितिथी तृतीयापौर्णिमे ऊर्जे कार्त्तिके तिथिरवी पूर्णिमाद्वादश्यौ शुचौ आषाढे दिक्तिथी दशमीपूर्णिमे ज्येष्ठे अंत्ये फाल्गुने च तिथिः उभयत्र पूर्णिमैव इषे आश्वि नेनवमी तपसि माघे अश्वाः सप्तमी सहस्ये पौषे शिवा एकादशी भाद्रपदे अग्निस्तृतीया तु इति पुनः नभसः श्रावणस्य कृष्णपक्षे अमावास्या अष्टमी अथ युगाद्या च त्वारः बाहुलराधयोः बाहुलः कार्त्तिकः राधो वैशाखः तयोः शुक्लपक्षे गोग्नी नवमी तृतीये युगादि कार्त्तिकशुक्लनवमी कृतयुगादिः वैशाखशुक्लतृतीया त्रेतादिः भाद्रमाघासिते मदनदर्शौ युगादि मदनस्त्रयोदशी दर्शो अमावास्या भाद्रकृष्णत्रयोदशी कलियुगादिः माघकृष्ण अमावास्या द्वापरादिः अत्र शुक्लादयो मासा ग्राह्याः का र्त्तिके शुक्लनवमी चादिः कृतयुगस्य सा त्रेतादिर्माधवे शुक्ला तृतीया पुण्यसंमिता कृष्णा पंचदशी माघे द्वापरादिरुदीरिता कल्यादिः स्यात्कृष्णपक्षे नभस्ये च त्रयोदशीति ना

अथनक्षत्रप्रकरणंव्याख्यायते तत्रादौनक्षत्रस्वामिनःशार्दूलविक्रीडितेनाह नासत्येति एतेनासत्यांतकादयः ऋक्षेशानक्षत्रेशाः क्रमात्स्युः १ अथध्रुवनक्षत्राणितत्कृत्यंचानुष्टुभाह उत्तरात्रयेति उत्तरात्रयंरोहिणीचएतानिनक्षत्राणिरविवारश्चध्रुवसंज्ञानिस्थिरसंज्ञानिचेतिसंज्ञाद्वयं एवमुत्तरत्रापिव्याख्येयम् ॥ ध्रुवनक्षत्रेषुस्थिरादिकर्मकार्यं आदिग्रहणान्मृदुनक्षत्रोक्तंग्राह्यं वसिष्ठः मृदुचन्द्रेकथितान्यपिस्थिरचन्द्रेतानिकार्याणिइति २ अथचरभानितत्कृत्यंचानुष्टुभाह स्वात्यादित्येति आदिशब्दाल्लघुनक्षत्रोक्तमपि ३ अथोग्रनक्षत्राणिचानुष्टुभाह पूर्वात्रयमिति आदिशब्दाद्दारुणनक्षत्रोक्तमपि ४ अथमि

नासत्यांतकवन्हिधातृशशभृद्रुद्रादितीज्योरगाऋक्षेशाःपितरोभगोर्यमरवीत्वष्टाससमीरःक्रमात् शक्राग्नीखलुमित्रइंद्रनिर्ऋतिक्षीराणिविश्वेविधिर्गोविन्दोवसुतोयपाजचरणाहिर्बुध्न्यपूषाभिधाः १ उत्तरात्रयरोहिण्योभास्करश्चध्रुवंस्थिरम् तत्रस्थिरंबीजगेहशांत्यारामादिसिद्धये २ स्वात्यादित्येश्रुतेस्त्रीणिचंद्रश्चापिचरंचलं तस्मिन्गजादिकारोहोवाटिकागमनादिकम् पूर्वात्रयंयाम्यमघेउग्रंक्रूरंकुजस्तथा तस्मिन्घाताग्निशाठ्यानिविषशस्त्रादिसिध्यति ४ विशाखाग्नेयभेसौम्योमिश्रंसाधारणंस्मृतं तत्राग्निकार्यमिश्रंचवृषोत्सर्गादिसिद्धये ५ हस्ताश्विपुष्याभिजितःक्षिप्रंलघुगुरुस्तथा तस्मिन्पण्यरतिज्ञानभूषाशिल्पकलादिकम् ६ मृगांत्यचित्रामित्रर्क्षंमृदुमैत्रंभृगुस्तथा तत्रगीतांबरक्रीडामित्रकार्यविभूषणम् ७ मूलेंद्रार्द्राहिभेसौरीतीक्ष्णंदारुणसंज्ञकं तत्राभिचारघातोग्रभेदाःपशुदमादिकम् ८ ॥ ८ ॥ ८ ॥ रामः

श्राण्यनुष्टुभाह विशाखेति आदिग्रहणादुग्रभोक्तमपि ५ अथलघुनक्षत्राण्यनुष्टुभाह हस्तेति शिल्पंवर्द्धकिविक्रयादि कलानृत्यादिकाश्चतुःषष्टिः आदिशब्दाच्चरमोक्तमपि ६ अथमृदुनक्षत्राण्यनुष्टुभाह मृगांत्येति ७ अथतीक्ष्णभान्यनुष्टुभाह मूलेति अभिचारःकर्माणम् भयकरकृत्यमारणादि पशुदमःपशुशिक्षा आदिशब्दात् बंधनादिकंस्थिरंच ८ ॥ ८ ॥ ७ ॥ ९ ॥ श्रीकृष्ण

अथाधोमुखोर्ध्वमुखतिर्यङ्मुखनक्षत्राणि इङ्गवजयाह मूलाहीति मूलं अहिभाश्लेषा मिश्रंकृत्तिकाविशाखे उग्रं पूर्वात्रयमघाभरण्यः एतानिनव।
भानिअधोमुखानिज्ञेयानि आर्द्रापुष्यः श्रवणत्रयंरोहिण्युत्तरात्रयंचनवभान्यूर्ध्वमुखानि मैत्राणिचित्रारेवत्यनुराधाः हस्तस्वातीपुनर्वसूज्येष्ठा अश्वि
नीएतानिनवभानितिर्यङ्मुखानि एषुअधोमुखोर्ध्वमुखतिर्यङ्मुखेषुभेषुइदंशंकृत्यंअधोमुखोर्ध्वमुखतिर्यङ्मुखकृत्यंसङ्गवति गरुडपुराणे भरणीकृत्ति
काश्लेषामघामूलविशाखिकाः तिस्त्रः पूर्वास्तथाचैव अधोवक्त्राः प्रकीर्तिताः एषुवापीतडागादिकूपभूमितृणानिच देवागारस्यखननंनिधानंखननंतथा।
था गणितंज्योतिषारंभंखनी बिलप्रवेशनं कुर्यादधोगतान्येवकार्याणिवृषभध्वज रोहिण्यार्द्रातथापुष्यो धनिष्ठाचोत्तरत्रयम् वारुणश्रवणंचैवनवचो
र्ध्वमुखास्तथा एषुराज्याभिषेकंचपट्टबन्धंचकारयेत् ऊर्ध्वमुखान्युच्छ्रितानिसर्वाण्येषुचकारयेत् रेवतीचाश्विनीचित्रास्वातीहस्तःपुनर्वसुः अनुराधा

मूलाहिमिश्रोग्रमधोमुखंभवेदूर्ध्वास्यमार्द्रेज्यहरित्रयध्रुवम् तिर्यङ्मुखंमैत्रकरानिलादितिज्येष्ठाश्विभानी।
दशकृत्यमेषुसत् ९ पौष्णध्रुवाश्विकरपंचककवासवेज्यादित्येप्रवालरदशंखसुवर्णवस्त्रम्॥ ७ ॥ ५९

मृगोज्येष्ठाएतास्तिर्यङ्मुखाःस्मृताः गजोष्ट्राश्वबलीवर्ददमनंमाहिषस्यच बीजानांवपनंकुर्याद्गमनागमनादिकम् चक्रयन्त्ररयारीनांनावादीनांप्रवाह
णं पार्श्वेषुयानिकार्याणिकुर्यादिपुचतान्यपि इदंचनक्षत्रविशेषविहितानांकर्मणामावश्यकर्त्तव्यत्वेमुहूर्त्तालब्धौमस्ताकर्मणः अधोमु
खाद्याकारंज्ञात्वातत्तन्नक्षत्रेषुतानिकर्माणिकार्याणियानिचसर्वथानोक्तानिबिलप्रवेशादीनितान्यपेषुवनक्षत्रेषुकार्याणीत्येतदर्थमुक्तम् ९
अथप्रवालादिधारणमुहूर्त्तंवसंततिलकेनाह पौष्णध्रुवेति रेवत्यादिनक्षत्रेषुतथारिक्तातिथिशनिचन्द्रभौमवर्जितेऽह्नि दिवसेप्रवाल
विद्रुमंशंखः शंखवलयादिवस्त्रंश्वेतं एतानिधार्याणि रक्तंमंजिष्ठादिरंगेनरंजितंवस्त्रंभौमवारेपिधार्यम् अथसुभगासभर्तृका ध्रुवादिति एव
युगेरोहिण्युत्तरात्रयेषु अदिति युगेपुनर्वसौपुष्येचप्रवालादिकंनदद्यात् कचिच्छ्रुतन्तारायांस्नानमपिनिषिद्धम्॥ ७ ॥ १ ॥ ९६

उक्तंच रोहिणीगुरुपुनर्वसूत्तरेया बिभर्त्तिनववस्त्रविभूषणम् सानयोषिदवलंबते पतिंस्नानमाचरतिवारुणेषुयादिति १० अथनवधाविभक्त
स्यवस्त्रस्यरंध्रादिदोषेशुभाशुभफलंशार्दूलविक्रीडितेनाह वस्त्राणामिति वस्त्राणांनवभागाः कार्याः कोणचतुष्टयेअमरादेवाः स्था
प्याः राक्षसामध्यगतांशगताज्ञेयाः नराः दशांसादितिपार्श्वचपुनर्मध्ययोरंशयोर्ज्ञेयाः तत्रचेद्रक्षोंशेनवतरेनूतनेवस्त्रेदैवाद्दग्धेअग्निस्पृष्टे स्फु
टितेपाषाणाद्याघातादिभिर्निहते पंकेनकर्दमेनआदिशब्दात् गोमयादिभिरुपहतेसतितद्वस्त्रंनसत् शुभफलजनकंनभवतीत्यर्थः नृसुरां
शयोएवंवस्त्रदाहादिकेसति शुभंकल्याणंस्यात् अथसर्वांशकेराक्षसमनुष्यदैवांशकेषुप्रांततः प्रांतभागे असदनिष्टफलगमकं इदंस
र्वंशय्यापादुकास्वपिज्ञेयम् श्रीपतिः कज्जलकर्दमगोमयलिप्तेवाससिदग्धवतेस्फुटितेचचिंत्यमिदंनवधाविहितेस्मिन्निष्टमनिष्टफ

धार्यंविरिक्तशनिचंद्रकुजेन्हिरक्तंभौमेध्रुवादितियुगेशुभमप्यनर्घ्यात् १० वस्त्राणांनवभागकेषुचचतुःकोणेमराराक्ष
सामध्यत्र्यंशगतानरास्तुसदृशेपार्श्वेचमध्यांशयोः दग्धेवास्फुटितेंबरेनवतरेपंकादिलिप्तेनसद्रक्षोंशेनृसुरांशयोः
शुभमसत्सर्वांशकेप्रान्ततः ११ विप्राज्ञयातथोद्वाहेराज्ञाप्रीत्यार्पितंचयत॥ ॐ ॥ छ ॥ रामचंद्र

लंचसुधीभिः अत्रराक्षसांशेध्वजछत्रादिसदृशीछेदाकृतिशुभफलाज्ञेया देवमनुष्यांशेपिकाकोलूकसदृशीछेदाकृतिरशुभफलदा कश्य
पः शंखचक्रांबुजछत्रध्वजतोरणसन्निभा श्रीवत्ससर्वतोभद्रनंद्यावर्त्तगृहोपमा वर्धमानस्वस्तिकेभमृगकूर्मझषाकृतिः छेदाकृतिर्दै
त्यभागेप्यायुरर्थप्रदानृणाम् खरोष्ट्रोलूककाकादिजंबूकश्वबकोपमा त्रिकोणः सूर्याकृतयोदैवभागेप्यशोभनाः निंदितंवसनंदद्याद्द्वि
जेभ्यः स्वर्णसंयुतंआशिषोवचनंकृत्वान्यद्वस्त्रंचधारयेदिति ११ अत्रक्वचिद्दुष्टदिनेपिवस्त्रपरिधानमनुष्टुभाह विप्राज्ञयेति धि
ष्ण्येनक्षत्रेवारादौवारतिथियोगादौव्यतीपातभद्रादिदुष्टयोगेनिंद्येपि॥ छ ॥

यद्दुस्त्रंब्राह्मणानुज्ञयातथोहाहेराज्ञासंतोषेणार्पितंदत्तंतद्वस्त्रंधार्यमितिबुधाजगुः १२ अथलतापादपारोपणराजदर्शनमद्ययोगो विक्रयमु-
हूर्त्तानशार्दूलविक्रीडितेनाह राधामूलेति राधाविशाखाएतदादिचतुर्दशनक्षत्रैर्लतानांवल्लीनांपादपानांवृक्षाणांचारोपोवापनःकार्यः
अथराजदर्शनं ध्रुवमृदुक्षिप्रश्रवोवासवैः त्रयोदशभैःकार्यं अथमद्यमद्यारंभः तीक्ष्णोग्राबुपभेषुनवनक्षत्रेषुउदितःकथितः अथगवांक्र-
योमूल्येनपरस्माद्ग्रहणम् विक्रयोमूल्यग्रहणपूर्वकंदानं क्षिप्रांत्यवह्नीदुभादित्येंद्राबुपवासवेषुहिनवनक्षत्रेषुशस्तःप्रशस्तः अत्रभीमप-
राक्रमेणपंचदशभान्यभिहितानि हस्तेनुराधात्रितयेसपौष्णेमृगेमेचपूर्वाश्विविशाखभेषु पुष्येधनिष्ठाहुतभेदितीशेगवांक्रयंविक्रयमामनंति

निंद्येपिधिष्ण्येपवारादौवस्त्रंधार्यंजगुर्बुधाः १२ राधामूलमृदुध्रुवर्क्षवरुणक्षिप्रैर्लतापादपारोपो
थोनृपदर्शनंध्रुवमृदुक्षिप्रश्रवोवासवैः तीक्ष्णोग्राबुपभेषुमद्यमुदितंक्षिप्रांत्यवह्नीदुभादित्येंद्रा-
बुपवासवेषुहिगवांशस्तःक्रयोविक्रयः १३ लग्नेशुभेचाष्टमशुद्धिसंयुतेरक्षापशूनांनिजयोनि-
भेवरे रिक्ताष्टमीदर्शकुजश्रवोध्रुवत्वष्ट्रेषुयानस्थितिवेशननसत् १४ ॥ १४ ॥ ५ ॥

न्ति १३ अथपशूनांरक्षामुहूर्त्तेस्थितिनिवेशनिषेधमुहूर्त्तंचेंद्रवज्रयाह लग्नेशुभइति शुभेशुभस्वामिकेलग्नेअष्टमशुद्धिसंयुतेशु-
भपापाक्रांताष्टमभावरहितेसतिपशूनांरक्षारक्षणप्रवेशादिकंचसत् तथास्वीययोनिनक्षत्रेवरभेचसत् यथाऽश्वानांयोनिभंअश्वि-
नीशततारके तच्चचतुष्पदानांरक्षाशस्ता तीक्ष्णेपशूनांदमनंवरंस्यात्सशुपोषणमितिवचनात् अथरिक्ता ४।९।१४ ष्टमीदर्शोमावास्याः
कुजोभौमः श्रवःश्रवणम् ध्रुवाण्युत्तरात्रयरोहिण्यः त्वाष्ट्रंचित्राएषुपशूनांयानंगृहाद्बहिर्निःसारणंस्थितिर्गोष्ठादिवेशनंनसत् शुभंन व्यव-
हारोच्चये पूर्वात्रयेधनिष्ठेंद्रयेपौष्णेसौम्यविशाखयोः आश्लेषायामयाश्विन्यांयात्रासिद्धिश्चतुष्पदामिति १४ ॥ १४ ॥ [illegible]

अथौषधसेव्योमुहूर्त्तेमंदाक्रांतमाह भैषज्यंसदिति भैषज्यंऔषधंप्राश्यंभक्षितंचसत् लघुमृदुचरनक्षत्रेमूलेचद्व्यंगलग्नेद्विस्व-
भावराशिषुमिथुनकन्याधनुर्मीनेषुलग्नगतेषुसत्सुशुक्रेंदुजीवबुधेषुद्विस्वभावलग्नस्थेषुसत्सुपुनस्तेषांशुक्रेंदुजीवबुधानांवारेष्वदिवसे
वारेसतिथौरिक्तामारहिततिथौभैषज्यंसत् शुभंस्यात् दीपिकायां द्व्यंगोदयेगुरुबुधेंदुसितेषुसत्सुतेषांवारेष्वसुविधौसुतिथौसुयोगेभेषुभ्रुप
त्नगविशाखशिवेतरेषुजन्मर्क्षविष्टिरहितेषुकृतःशुभायइति अथरिःफघुनमृतिमृहेलग्नात् द्वादशसप्ताष्टमगृहेषुशुद्धेषुभपापग्रहरहितेषु
सत्सुऔषधंतुवर्षफलप्रश्नादिनाआयुर्निश्चयेचसत् द्यूनशत्रुनिधनव्ययशुद्धोसदुहेषुनितरांबलवत्सुआयुषश्चहितकारिणियोगकीर्तितानियत
मौषधसेवनेतिश्रीपतिभट्टोक्तेः अथजनेर्भेजन्मनक्षत्रेनोभैषज्यंसत् जन्मनक्षत्रगश्चन्द्रःप्रशस्तःसर्वकर्मसु क्षौरभेषजवादाध्य केतवेषुविवर्जयेदिति

भैषज्यंसल्लघुमृदुचरेमूलभेद्व्यंगलग्नेशुक्रेंदुज्येविदिचदिवसेचापितेषांरवेश्च शुद्धेरिःफद्युनमृतिगृहेसतिथौनोजने।
भेसूचीकर्माप्यदितिवसुभेत्वाष्ट्रमित्राश्विपुष्ये १५ क्रयर्क्षेविक्रयोनेष्टोविक्रयर्क्षेक्रयोपिन पौष्णांबुपाश्विनीवातःश्रवश्चि
((त्राक्रयशुभाः १६

ववनात् अथसूचीकर्मसूच्याःसंबंधिकर्मघटनसीवनादि तिवसुभत्वाष्ट्रमित्राश्विपुष्यनक्षत्रेसत्स्यात् व्यवहारोच्चये अदिति
र्वासवंत्वष्टामित्रभेदववाजिनःसूचीकर्मतनुत्राणमेभिर्ऋक्षैःप्रशस्यतइति १५ अथान्यदनुष्टुभाह क्रयर्क्षइति क्रयर्क्षेवक्ष्यमाणक्रयनक्षत्रेविक्रयो
नकार्यः तथाविक्रयनक्षत्रेक्रयोपिनकार्यः दीपिकायांयमाहिशक्राग्निविशाखपूर्वानिष्टाःक्रयेविक्रयणेतिशस्ताःपौष्णाश्विचित्राशतविष्णुवा
ताःशस्ताःक्रयेविक्रयणेनिषिद्धाइति ननुयदायेनक्रयःकर्तव्यस्तदाअन्येनविक्रयःकर्त्तव्यस्तत्रक्रयविक्रयनक्षत्राणांमहाभेदाद्भयविधमुहू
र्त्तानुपपत्तिःउच्यते विक्रेतायदामुहूर्त्तेविक्रयार्थंगृह्यतेतदावस्तुपृथक् क्रियतेतत्कर्मविक्रयशब्दवाच्यम् यदाक्रयिणाक्रयार्थंमुहूर्त्तेःप्राप्यतेतदा
विक्रयेत्रेमूल्यद्रव्यंदत्वापृथक्कृतविक्रेतवस्तुयात्यतक्रयशब्दवाच्यमितिमत्वायथाकथंचित्समाधेयं तन्नक्रयमुहूर्त्तेः रेवतीशततारा अश्विनीस्वाती

अथविक्रयविपण्योर्मुहूर्त्तंशार्दूलविक्रीडितेनाह पूर्वाद्वीशेतिद्वीशंविशाखा पूर्वादिनक्षत्रेषु केंद्रेषुप्रथमचतुर्थसप्तमदशमेषुद्वितीयेकोणेनवपंचमेषुशुभैः॥ सद्भिःषट्त्र्यायेषुपापग्रहैःसद्भिःघटतनुंकुंभलग्नंविनात्यक्त्वासतिथौरिक्तामारहिततिथौविक्रयःसन्शुभोज्ञेयः अथविपणिःपण्यवीथिकागृहस्थि त्वाक्रयविक्रयार्थंयकर्मरिक्तातिथिभौमवारकुंभलग्नानिवर्जयित्वाम्येषुतिथिवारलग्नेषुमित्राणिमृगरेवतीचित्रानुराधाःध्रुवाणिरोहिण्युत्तरात्रयंक्षिप्रा णिहस्ताश्विपुष्याः एतैर्भैः लग्नेचंद्रस्थितेमूर्त्तौचंद्रेसितेचसतिव्ययाष्टरहितैःपापग्रहैःसद्भिः शुभैर्द्यायखेद्वितीयेकादशमेषुसद्भिर्विपणिःशुभास्यात् १७ अथाश्वगजमुहूर्त्तमिंद्रवज्त्रयाह क्षिप्रान्त्येति क्षिप्रादिनक्षत्रेषुरिक्ताभौमव्यतिरिक्तदिनेवाजिकृत्यमश्वानांक्रयविक्रयशिक्षास्थानाभरण

**पूर्षाद्वीशकृशानुसार्पयमभेकेंद्रद्विकोणेशुभैः षट्त्र्यायेष्वशुभैर्विनाघटतनुंसन्विक्रयःसत्तिथौ रिक्ताभौमघटान्विनाच विपणिर्मित्रध्रुवक्षिप्रभैर्लग्नेचंद्रसितेव्ययाष्टरहितैःपापैःशुभैर्द्यायखे १७ क्षिप्रांत्यवस्विंदुमरुज्जलेशादित्येष्वरिक्तारदिनेप्रशस्तं स्याद्वाजिकृत्यंत्वथहस्तिकृत्यंकुर्यान्मृदुक्षिप्रचरेषुविद्वान् १८ स्याद्भूषाघटनंत्रिपुष्करचरक्षिप्रध्रुवैरत्नयुक् तत्तीक्ष्णोग्रविहीनभैरविकुजेमेषालिसिंहेतनौ॥**

दिकार्यंप्रशस्तंस्यात् श्रीपतिःपुष्यश्रविष्ठाश्विनसौम्यभेषुपौष्णान लादित्यकराह्वयेषु सवारुणर्क्षेषुबुधैःस्मृतानिसर्वाणिकार्याणितुरंगमाणां अश्वारोहणेचक्रं अश्वाकारंलिखेच्चक्रंसाभिजिद्भानिविन्यसेत् स्कंधेवु सूर्यभात्संचपृष्ठेचदशभानिचपुच्छेद्वेस्थापयेच्चाङ्घ्रौचतुष्पादश्चतुष्टयम् उदरेविन्यसेत्सं चमुखेद्वेतुरगस्यच अर्थलाभोमुखेसम्यकृवाजिनश्चाति चोदरे चरणस्थैरणेभंगःपुच्छेपत्नीविनश्यति अर्थसिद्धिर्भवेत्पृष्ठेस्कंधेस्कंधपतिर्भवेत् इति अथविद्वान् ज्ञातामृदुक्षिप्रचरनक्षत्रेषुरिक्तामाभौम वर्जितदिनेचहस्तिकार्यंगजानांकार्यंक्रयविक्रयभूषादिकुर्यात् वसिष्ठः हस्तत्रयेसौम्यहरित्रयेचपौष्णद्वयेपुष्यपुनर्वसौचमैत्रेसर्वाण्यपिकुंजरा णांकर्माणिशस्तान्यखिलानियानीति १८ अथभूषणघटनमुहूर्त्तंशार्दूलविक्रीडितेनाह [illegible]

वस्पति एवंविधेत्रिपुष्करदिनंचरक्षिप्रध्रुवनक्षत्रेषुभूषाघटनमाभरणघटनंशुभंस्यात् वसिष्ठः क्षिप्राचलचरभेसेरिक्तामावर्जितेषुदि॰
वसेषु निखिलेष्वपिवारेष्वपित्रिपुष्करेभूषणकार्ये अथतद्भूषणंरत्नयुतमाणिक्यादियुतंचेत्तदांतीक्ष्णोग्रविहीनभेतीक्ष्णानिमूलज्येष्ठाआर्द्रा
श्लेषाख्यानि उग्राणिपूर्वात्रयमघाभरण्यः एतद्व्यतिरिक्तेष्वष्टादशनक्षत्रेषुतथारविभौमवारेपिकार्यं तथामेषवृश्चिकसिंहलग्नेषुचवसिष्ठःस्थि
रताभरणचरमेलघुभैत्रेष्वर्ककुजवारे तेषामेवविलग्नेमाणिक्यमयभूषणंकार्यमिति कर्कवृषतुलालग्नेष्वकार्यमित्यपिज्ञेयम् वसि॰
ष्ठः क्षिप्रमृदुध्रुवचरभेशशिसितयार्वासरेषुतल्लग्ने मुक्ताफलरजतमयभूषणमखिलंसवज्रकंकार्यम् अथतीक्ष्णानिमूलज्येष्ठार्द्राश्ले॰
षाः उग्राणिपूर्वात्रयभरणीमघा अश्विनीमृगो हृद्दैवंविशाखाः दहनःकृत्तिका एषुनक्षत्रेषुघटितंशस्त्रंशुभंस्यात् अदितिर्वासववस्त्वाष्ट्रमैत्रमैत्र

तस्युक्तासहितंचरध्रुवमृदुक्षिप्रेषुभेसत्तनैतीक्ष्णोग्राश्विमृगेहृद्दैववदहने शुक्लंशुभंघट्टितं १७ मुद्राणांपातनंसद्ध्रु
वमृदुचरभक्षिप्रभैर्वीन्दुसौरे पक्षेपूर्णाजयाख्येनचगुरुभृगुजास्तेविलग्नेशुभैःस्यात् ॥ ❀ ॥ श्रीः ॥

वषाजिनः स्त्रीकर्मनन्नुत्राणमेभिर्नृसैः प्रशस्यतइतिनक्सोत्वयोक्तेः अथस्कवर्णरूप्यादिपात्रेभोजनमुहूर्त्तमाह वसिष्ठः लघुमैत्रध्रुवचरभेसि॰
तेंदुबुधजीववारेषु हेमरजतादिभाजनभोजनमारोग्यामृतयोमिषुदृति १९ अथमुद्रापातनमुहूर्त्तंवस्त्रक्षालनमुहूर्त्तंचवस्त्रगधराह मुद्राणामिति
ध्रुवमृदुचरक्षिप्रसंज्ञकैर्नक्षत्रैः कल्याराजमुद्राकिंतुस्वर्णरूप्यादिनिष्पादनंमुद्रापातनमित्युच्यते टंकसालेतिभाषयावीन्दुसौरे पक्षेचन्द्रशनैश्च
रवर्जितवारे तथापूर्णाजयाख्ये पूर्णाःपंचमीदशमीपूर्णिमाः जयास्तृतीयाष्टमीत्रयोदश्यः एतास्तिथिषिवित्यर्थः शुभंस्यात् तथागुरुशुक्रास्तेनशुभ
भे विलग्नेशुभैःलग्नेशुभग्रहैःसद्भिरित्यर्थः उक्तंच मृदुध्रुवक्षिप्रचरेषुभेषुयोगप्रशस्तेशशिमन्दवर्ज्येवारेतिथौपूर्णजया स्वये च मुद्रामतिष्ठाशुभ
मदानराणां गुर्वस्तेवासितास्तेवामुद्राणांघटनंक्वचित्क्रूरग्रहदृशालग्नेनकार्यंभूतिमिच्छता अथध्रुवेवस्त्रधनिष्ठा॥ ❀ ॥ २ ॥

हयोश्विनी दिनकृत्हस्तः तस्मात्संचके हस्तचित्रास्वाती विशाखानुराधास्कः आदित्यं पुनर्वसुः पुष्ये वस्त्राणां क्षालनं रजकाधानार्थं इदानीं सत् शुभं स्यात् रिक्ताः पर्वाणि पूर्वोक्तानि तिथिप्रकरणे षष्ठी पितृदिनं श्राद्धदिनं एतेषु रविजज्ञेषु शनिबुधवारेषु कदापि वस्त्रक्षालनं नो कार्यं २० अथ खड्गादिधारणं शय्याद्युपभोगमुहूर्तं चसन्धरयाह संधार्य इति विरिक्ते रिक्तावर्जितशुक्रगुरुबृहस्पतिरविवारे तथा मैत्रध्रुवलघुसंज्ञकनक्षत्रसहितपुनर्वसुज्येष्ठाविशाखानक्षत्रेषु कुंतादयः संधार्याः कुंतो भल्लः वर्म कवचं इषवो बाणाः आस्यते अनेनेति इष्वसनं धनुः शरो बाणः कृपाणः खड्गः असिपुत्री छुरिकासन्नाहोपीतिके चित् तथा स्थिराख्य वृषसिंहवृश्चिककुंभाख्ये लग्ने चंद्रे अपिशब्दात् लग्नेपि

वस्त्राणां क्षालनं सदहस्कृद्धयदिनकृत्संचकादित्यपुष्ये नो रिक्तापर्वषष्ठीपितृदिनरविजज्ञेषु कार्यं क
दापि २० संधार्याः कुंतवर्मेष्वसनशरकृपाणासिपुत्र्यो विरिक्ते शुक्रेज्यार्केह्नि मैत्रध्रुवलघुस
हितादित्यशाक्रद्विदैवे स्युर्लग्ने हि स्थिराख्ये शशिनि च शुभदृष्टे शुभैः केंद्रगैः स्याद्भोगः शय्यासना
देर्ध्रुवमृदुलघुहर्यंतकादित्यइज्यैः २१ ॥ २१ ॥

शुभदृष्टे शुभैः केंद्रगैः सद्भिः कुंतादिधारणं हितं कैश्चिदुच्यते पु
ष्ये वा दितिचित्रपद्मननयेशक्रोत्तरारेवती वाजीहस्तविशाखमित्रसहिते भानोर्गुरौ भार्गवे कुंभे कीटगृहे वृषे मृगपतौ चंद्रे शुभैर्वीक्षिते संनाहं
शरखड्गकुंतछुरिकाधार्यान्नृपाणां हितेति यत्तु दीपिकायां मूलेंदुपूर्वात्रययाम्यपित्र्यशक्राश्विसर्पानलशूलिनश्च शस्त्रादिसंधारणमेषु कुर्यात्ति
थौ विलग्ने च शुभेषु भाहेत्विति तदासन्नियुद्धादिविषयं अथ ध्रुवमृदुलघुनक्षत्रेषु हरौ श्रवणे अंतके भरण्यां आदित्ये पुनर्वसौ एषु शय्यासनादेः शय्या
खट्वादिरूपा आसनं पीठं मृगचर्मादि आदिशब्दात् पादुका तेषामुपभोगः इष्टः हितः दीपिकायां मैत्रेंदुपुष्ययमभादितिवह्निचित्राहस्तोत्तरात्रयहरीज्य
विधातृभानि एतेष्वतीवशयनासनपादुकानां संभोगकार्यमुदितं मुनिभिः शुभाहेत्विति ॥ २१ ॥ २१ ॥ छ ॥ श्रीजगदंबा

अथांधादिदिननक्षत्राणि शार्दूलविक्रीडितेनाह अंधाख्यमिति धातारोहिणी विधिरभिजित् दहनभंकृत्तिका भगःपूर्वाफाल्गुनी अन्यत्स्पष्टं २१ अं
धादिनक्षत्राणांफलमनुष्टुभाह विनष्टार्थइति अंधनक्षत्रेषु विनष्टस्यापहृतस्यार्थस्यलाभः शीघ्रंभवति मंदनक्षत्रेषु विनष्टार्थस्यप्रयत्नतोलाभो
भवति मध्येमध्यमनक्षत्रे विनष्टार्थस्यदूरस्थनगरादावीवदूरदेशे श्रवणंस्वरीयद्रव्यममुकेनहृतं अमुकस्थले तिष्ठतीति लोकवार्ताभवति लो
चनस्तु नास्ति स्फुरोचनक्षत्रेषु श्रुत्याप्तीन श्रवणमपिलब्धिरपिनभवतीत्यर्थः २३ अथधनप्रयोगेतिनिषिद्धनक्षत्राण्यनुष्टुभाह तीक्ष्णेति एते
स्तीक्ष्णदिननक्षत्रैर्यद्द्रव्यंस्फुवर्णादिदत्तंकालांतरं विनादत्तंनस्वसत्तापरित्यागेन निवेशितस्थाप्यसमीपेप्रत्ययार्थंस्थापितं प्रयुक्तंकालांतरीति

अंधाख्यंवसुपुष्यधातृजलभद्दीशार्यमांत्याभिधंमंदाख्यंरविविश्वमैत्रजलपाश्लेषाश्विचांद्रंभवेत् मध्याख्यंशिवपि
त्रजैकचरणत्वाष्ट्रेंद्रविध्यांतकंस्वख्यंस्वात्यतिश्रवोदहनभाहिर्बुध्न्यरक्षोभगम् २२ विनष्टार्थस्यलाभोंधेशीघ्रंमंदेप्र
यत्नतः स्याद्दूरेश्रवणंमध्येश्रुत्याप्तीनस्फुलोचने २३ तीक्ष्णमिश्रध्रुवोग्रैर्यद्द्रव्यंदत्तंनिवेशितं प्रयुक्तंचविनष्टंचवि
ष्टिपातेचनाप्यते २४ मित्रार्कध्रुववासवांबुपमघातोयांत्यपुष्येंदुभिः पापैर्हीनबलेस्तनौस्फुरगुरौज्ञेवाभृगौरवेवि

धुरःसरंकर्मैविहत्तं विनष्टंचौरादिनाहृतंस्वयमेवच्युतं वित्तंतंद्रव्यंविश्वयेनकदापिनाप्यते तथाविष्टयांभद्रायांपातेव्यतीपातेमहापातेवाहृतं
द्रव्यंनाप्यते चकाराद्ग्रहणेपि वसिष्ठः ध्रुवोग्रसाधारणदारुणर्क्षैर्निक्षिप्तमर्थंत्वथवाप्रनष्टं चौरैर्हृतंदत्तमुपप्लुतंवा विष्ट्यंचपातेननलभ्यतेतदिति
अत्रेदमनुसंधेयं तीक्ष्णमिश्रादिपंचदशभेषुमध्येरोहिण्यार्यमक्षिप्रजलभद्दीशेषुदत्तंनिवेशितप्रयुक्तद्रव्यस्यैवाऽप्राप्तिः चौरापहृतस्यस्वतोगतस्यवा
धनस्यलाभएवं तेषांरोहिण्यादीनामध्यमलोचनेषुपाठसामर्थ्यादितिभावः २४ अथजलाशयखननन्नृत्यारंभयोर्मुहूर्तंशार्दूलविक्रीडितेनाह मित्रा
र्कैति अनुराधाहस्तयोरश्वनक्षत्रैः सद्भिःपापग्रहैर्हीनबलैर्वर्जितैः सद्भिःतनौलग्नेस्फुरगुरौसतिबुधेवासति विदग्मे ... केसति॥ ६ ॥ १५

आप्येजलराशौविधौसति सर्वतोयाशानीवापीकूपतडागादीनांतोयाधाराणांखननंहितंस्यात् आप्यांबुयांत्यपितृमित्रवसूत्तरार्के
र्केहीज्यभेषुखननंसलिलाशयानामितिव्यवहारतत्वोक्तेः श्रीपतिः लग्नेजीवेज्ञेथवादुर्बलैश्चक्रूरैः शुक्रेवारिमध्यगस्थे आप्येचंद्रे
सर्वतोयाशयानामारंभाःस्युःसिद्धयेनिर्विकल्पमिति अथनृत्यारंभः तैःप्रागुक्तैर्नक्षत्रैर्व्यभामघैः पूर्वाषाढामघारहितैःसंद्रभैर्ज्येष्ठासहितैः
मित्रार्कध्रुववासवांबुपांत्यपुष्येंदुज्येष्ठानक्षत्रैः नृत्यारंभःशुभःस्यात् शुभेहिबुकेचतुर्थस्थानेलग्नेज्ञेसति अज्ञे चंद्रेज्ञराशौमिथुनकन्यास्थे
सतीत्यर्थः २५ अथसेवकस्यस्वामिसेवायांमुहूर्त्तंशालिन्याह क्षिप्रेति क्षिप्राणिहस्ताभिजिदश्विपुष्याः मैत्राणिमृगरेवतीचित्रानुराधाः एतेषु
नक्षत्रेषुबुधशुक्रसूर्यवारे सौम्येशुभग्रहेलग्नगेसति अर्केभौमेवाखलाभेदशमेएकादशेचस्थितेसतिसेवकेनस्वामिनःसेवाकार्यातत्र

आप्येसर्वेजलाशयस्यखननंव्यंभोमघैःसंद्रभैस्तैर्नृत्यंहिबुकेशुभेस्तनुगृहेज्ञेज्ञेज्ञराशौशुभं २५ क्षिप्रेमैत्रेविति
तार्केज्यवारेसौम्येलग्नेर्केकुजेवाखलाभे योनैर्मैत्र्याराशिपोश्चापिमैत्र्यांसेवाकार्यास्वामिनःसेवकेन २६ स्वात्या
दित्यमृदुद्व्हिदैवगुरुभेकर्णत्रयाश्वेचरेलग्नेधर्मसुताष्टशुद्धिसहितेद्रव्यःप्रयोगःशुभः॥ स्वामिसेवकनक्षत्रयोन्यो मैत्र्यां
चपुनःराशिपोःसेव्यसेवकयोराशिस्वामिनोर्मैत्र्यांप्रीतौसत्यांसेवकार्या अन्यथानकार्या २६ अथद्रव्यप्रयोगऋणग्रहणमुहूर्त्तंशार्दूल
विक्रीडितेनाह स्वात्यादित्येति स्वात्यादिषुएकादशनक्षत्रेषुचरेमेषकर्कतुलामकराणामन्यतमेलग्नेधर्मेनवमेसुतःपंचमं अष्टमंएतेषांशु
द्धिःनवपंचमयोःपापग्रहराहित्यंअष्टमेतुशुभपापराहित्यमेव रूपाशुद्धिस्तयासहितेलग्नेद्रव्यप्रयोगःऋणदानंशुभंस्यात् भौमपराक्रमेपु
ष्यपुष्याश्विनीचेवविशाखाश्रवणत्रयंपुनर्वसौत्रंसंसंति धनादिनिधिवर्त्तनं वर्त्तनमृणादिरूपणदानं मिश्रनक्षत्रत्वाद्विशाखायांनिषेधप्राप्ते
ऋणदानेएवविधिः त्तेनष्टादौनिषिद्धेव शुद्धेषुधर्मात्मजनैधनेषुचरेविलग्नेद्रविणप्रयोगःइति अथारेभौमवारेऋणनयात्स्वंऋणंभौमेमे

ऋणच्छेदं कुजे कुर्यात्संचयं सोमनंदने अथतु विशेषे संक्रमसंक्रांतिदिवसे वृद्धौ वृद्धियोगे करे हस्तनक्षत्रे अर्के रविवारे इतियत् तत्र
पि न यात् मित्येकसंबंधः यत् यस्माद्धेतोस्तदृणं तद्वंशोद्भवः ऋणग्रहीतुः कुलेषु भवेत् तत्पुत्रपौत्रादिभिरपि परिहर्तुमशक्यमित्यर्थः हस्तेऽर्कवारे
संक्रांतौ यद्दृणं स्यात्कुलेषु तत् वृद्धियोगे तथा ग्राह्यमृणच्छेदं तु कारयेदिति ज्योतिःप्रकाशोक्तेः बुधवारे ऋणं कदापि न देयम् २७ अथ हलप्र
वाहमुहूर्तं शार्दूलविक्रीडितेनाह मूलद्वीशेति एतैः मूलादिभिरेकोनविंशतिनक्षत्रैः विनार्कशनिर विशनिवारौ वर्जयित्वान्यवारेषु तत्रापि
पे हीनबले निर्बलेः चंद्रे जलराशिनवांशके सति शुक्रे चंद्रे च मासले पुष्टे सतिः इति तेरर्थः गुरौ लग्ने च सति तदा प्रथमं हलप्रवहणं शस्तं तस्या
त् कश्यपः गुरौ लग्नगते शुक्रे बलिन्याप्यादये विधौ शस्ता कृषिक्रिया तत्र दुर्बलैः क्रूरखेचरैः अथ सिंहे घटे कुंभे कर्के अजमेष एणो मकारे।

नारे स्यात्यमृणंतु संक्रमदिने वृद्धौ करे वै न्हिय न हंशे शुभं वेद्दृणं न च बुधे देयं कदाचिद्बुनं २७ मूलद्वीशमघाचरध्रुवमृ
दुक्षिप्रैर्विनार्कशनिं पापैर्हीनबले विधौ जललवे शुक्रे विधौ मांसले लग्ने देवगुरौ हलप्रवहणं शस्तं न सिंहे घटे कर्कोजे
णधे टतनौ क्षयकरं रिक्तास्कषष्ठ्यां तथा २८ एतेषु श्रुतिवारुणादितिविशाखोडूनि भौमं विना बीजोप्तिर्गदिता शुभा त्वशुभ
॥तोष्टमीदुरा मेदवः

षे तुलायां तथा रिक्तास्कषष्ठ्यां तथा शब्दोनुक्तसमुच्चयार्थस्तेनाष्टम्यामपि न शस्तः यस्मात्क्षयकरं २८ अथ बीजोप्तिमु
हूर्तं फणिचक्रं च शार्दूलविक्रीडितेनाह एतेष्विति पूर्वोक्तनक्षत्रेषु श्रुतिवारुणादितिविशाखोडूनि विना श्रवणादिवर्जितेषु मूलमघाध्रुवमृदुक्षि
प्रधनिष्ठास्वातीषु भौमं विना भौमवारव्यतिरिक्तवारेषु बीजोप्तिः बीजवापनं शुभं तदयं भावः मृदुध्रुवक्षिप्रभेषु पितृवायुवसूडुषु संमूलभेषु बीजोप्ति
रत्युत्कृष्टफलप्रदा रवौ रौद्राद्यपादस्थे भूमौ सञ्जायते रजः तस्माद्दिनत्रयं तत्र बीजवापं परित्यजेदिति राजमार्त्तण्डे आर्द्राप्रथमदिनत्रयनिषेधः अथ बी
जोप्तौ फणिचक्रं अशुभतो न विद्यते गावो यस्येति अगुः राहुः तस्य भतदाक्रांतनक्षत्रं तस्मादादौ अष्टौ भानि असंति असमीचीनानि ततस्त्रीणि शुभ

ततएकमशुभं ततस्त्रीणिशुभानि ततश्चत्वार्यशुभानि एवंवीजोनैःसप्तविंशतिनक्षत्राणांशुभाशुभत्वमुक्तं रत्नमालायां मूर्ध्नित्रीणिगले
त्रयंचजठरेधिष्ण्यानि चद्वादशेत्यादि लग्नशुद्धिमाह वसिष्ठः भवत्रिषु सहजेपापैस्त्रिकोणकेंद्रेस्थितेश्चशुभैः कथितेशुभधिष्ण्येपिचशुभलग्नेनवी
जवापनंकार्यं अथहलचक्रमुच्यते हलेइतिहलचक्रेअर्कोश्रितात्भात्नक्षत्रात्क्रमेणत्रीणिअसंति अशुभानि ततोष्टभानि संतिशुभानि
ततोनवभानिअसंति ततोष्टौभानिसंति यथा सूर्यआर्द्रायांभुक्तभंमृगः ततआरभ्यत्रीणिअशुभानिततः पुष्यनोष्टभानिशुभानि ततोविशाखा
तोनवभान्यशुभानि ततः शततारकातोऽष्टभानिशुभानि एवमष्टाविंशतिभानिजातानि तथावसिष्ठः अर्कगतागतसंस्थभत्रितयुंते अष्टमुभ
यतस्त्विष्टषोडशधिष्ण्यंयनवकंधिष्टमनिष्टंचलांगलेचक्रे कश्यपेपित्रिषष्ठकनवर्क्षेषुसप्तस्वर्क्षेविमुक्तभात् हानिर्वृद्धिः कर्तृनाशोलक्ष्मी
प्राप्तिर्यथाक्रमादिति एवंबहुमुनिसंवादेसंतिइत्नयोस्थितर्क्षात् त्रिवह्नित्रीशुत्रीशुत्रिसमा ३।४।३।५।३।५।३।३ण्यक्षभंदशुभानिक्रमात्स्युलागला

रामेंदुस्त्रिसुगान्यसच्छुभकराण्युप्तौहलेर्कोश्रिताद्भाद्ग्रामाष्टनवाष्टभानिमुनिभिःप्रोक्तान्यसत्संतिच २६॥

रव्येश्रितियदुक्तंगणेशदैवज्ञैर्मुहूर्ततत्वेतच्चिंत्यं त्रिवाक्यमूलाभावात् ननुश्रीपतिवाक्यं अर्ककांतगतान्यूनड्हानाशायमान्यमतो वृद्धौभत्रितयं
ततस्तुकृषिकृद्घातायशूलत्रयधिष्ण्यानांनवकंतदंतरगतेस्याताश्रियैपंचकेपश्चान्यत्रितयंतस्त्वगदितचक्रेशुभंलांगलेइतिमूलंचेत् नत्र
पश्चायतिवाक्येशब्दार्थः किंतुमूलवाक्यवेपरीत्यज्ञानप्रकाशकः वाक्यार्थस्तु अर्ककांतगतानित्रीणिभानिवृषनाशकराणिस्युः ततस्त्रीणिवृद्धौ
ततः पंचनक्षत्राण्यपास्य अग्निभाणिनवभानिशूलत्रयेत्रिकंत्रिकंकृषिकृत्घातायस्याय्यानि नन्वत्रपंचनक्षत्रत्यागेकोहेतुरित्यतआह तदंतरग
तेपंचकइति तच्छब्देनहलोर्ध्वदंडाशूलोर्ध्वदंडावनुच्यते अर्ककांतगतागतान्यूनड्हानाशायमान्यमतो वृद्धौभत्रितयं अयमंतरस्यपूर्वावधिः मध्येत
ततःपरोपादानात्तुशब्दस्तु आनंतर्यद्योतनार्थः तु अनंतरशूलत्रयेधिष्ण्यानांनवकंकृषिकृत् घातायेति अंतरस्योत्तरावधिः तयोरंतरगतेमध्येवि
द्यमानाधिष्ण्यानांपंचकंचपंचकंचश्रियैस्थाप्येन इत्यर्थः इतिमावत् यच्चान्यद्गदितपदलग्नंतो [illegible]

क्षवारे धान्यानां स्थितिः एकत्रस्थले स्थापनं साशुभकरी निगदिता अथ भुवेज्यादित्रयोदशनक्षत्रेषु धान्यवृद्धिः॥ भक्ष्यमेतावद्धान्यं देहि इति सीमा सहयानंतरं सपादं सार्धं वा दास्यामीत्येवंरूपा वृद्धिर्निगदिता ३३ अथ शांतिकपौष्टिकादिकं वसंततिलके नाह क्षिप्रेति क्षिप्रादिनक्षत्रेषु पौष्टिकमंगलाभ्यां सह पौष्टिककर्मणा ग्रहशांत्या मंगलकर्मणा विना विनायकशांत्या सह शांतिकं दुष्टफलदं मूलादिनक्षत्रोत्पन्नशांत्यादि शुभं स्याद्लग्नात् रवेदशमे केसति विधौ चंद्रेसु स्वगते चतुर्थे गुरौ लग्नस्थे सति ततः शांतिकं मौढ्यादिदुष्टसमये गुरुशुक्रकास्तादिदुष्टकाले नो शुभमदः तच्चानिमित्तकेत्वाद्युत्पातदर्शने सति गुरुशुक्रकास्तादावपि शुभं स्यात् उक्तंच शांतिकर्माणि कुर्वीत रोगे नैमित्तिके तथा गुरुभार्गवमौढ्येपि दोषस्तत्र न विद्यते ३४ अथ होमाहुतिशुद्धिमनुष्टुभाह सूर्यभादिति सूर्याक्रांतनक्षत्रात् त्रित्रिभेन सप्तनवमध्ये चंद्रे चंद्रनक्षत्रे दिननक्षत्रे सति क्रमात् सूर्यादिस्वरेवहोमा

धान्यस्थितिः शुभकरी गदिता ध्रुवेज्यद्वीशं द्ववचरभेषु च धान्यवृद्धिः ३३ क्षिप्रध्रुवांत्यचरमैत्रमघासु शस्तं स्याच्छांतिकं सह च मंगलपौष्टिकाभ्यां रवेर्के विधौस्वगते तनुते गुरौ नोमौढ्यादिदुष्टसमये शुभमदं निमित्ते ३४ सूर्यभात्त्रित्रिभे चंद्रे सूर्यविज्ञुक्रपंगवः चंद्रारेज्यागुशिखिनो नेष्टा होमाहुतिः खले ३५ सैका तिथिर्वारयुताकृताप्ता शेषे गुणेभ्रे भुविवन्हिवासः॥

हुतिः पतति यथा सूर्याक्रांतनक्षत्रात् नक्षत्रत्रयमध्ये होमारंभे सूर्यमुखे होमाहुतिपातः ततो नक्षत्रत्रयेषु बुधस्य ततः शुक्रस्य ततः पंगोः शनेः ततः चंद्रस्य ततः आरस्य भौमस्य ततः ईज्यस्य गुरोः ततः राहोः ततः शिखिनः केतोः एवं सति यद्दिने खले पापग्रहमुखे होमाहुतिः पतति सा नेष्टा न शुभदा अर्थाच्छुभग्रहमुखे शुभा सूर्यनक्षत्राच्चंद्रनक्षत्रपर्यंत गणना ३५ अथ यद्दिने होमः स्थितिः पितस्तद्दिने वन्हिनिवासवशेन शुभाशुभफलमिंद्रवज्रयाह सैकेति शुक्लप्रतिपद्गणनया वर्तमानतिथिर्गण्या एकयुता वर्तमानवारयुता चतुर्भक्ता यच्छेषं तच्चेत् गुणमितं त्रिमितं शून्यमितं च तदा भुवि भूमौ वन्हिवासः वसतिः फलमाह सौख्याय होमे होमदिने भूमौ वन्हेर्वासे सति सौख्यं भवति अथ शशियुग्मशेषे एकमिते शेषे ऽग्निवासो दिवि स्वर्गे फलं कर्तुः प्राणनाशः द्विमिते शेषे ऽग्निवासो भूतले॥ ६

तत्फलं कर्तुरर्थनाशः उक्तं च तिथिवारश्रुतिः सैकावेदभक्तावशेषकात् निवासो गेर्व्योम्नि रूपे वित्तप्राणविनाशदः पाताले हि कशेषेण धनसंच
यनाशनः गुणवेदावशेषेण भूमौ विपुलसौख्यदः संस्कारेषु विचारोऽस्य न कार्यो नापि वैष्णवे नित्ये नैमित्तिके कार्ये न चाब्दे मुनिभिः स्मृतः वै क्षितौ
दस्रूपस्थ मपि होमे वर्ज्यमित्युक्तम् तद्यथा अर्कस्य द्वादशे मत्स्यश्चतुर्थे मंदः शुक्रादष्टमे गारकस्य राहुधर्मे जीवतः खेटस्य सेहोमेनाशः पुनर्दशधनानामिति ३६
अथ प्रतिवर्षोत्पन्ननवान्नभक्षणमनुष्टुभाह नवान्नमिति वरादि द्वादशभेषु सत्तनौ समीचीनलग्ने शुभग्रहैर्युते दृष्टे चेत्यर्थः नंदातिथयः १।६।११ विष
घटी विवाहप्रकरणोक्ताः मधुश्चैत्रः पौषः अर्कशनिः भूमिजो भौमः एतान्विना वर्जयित्वा नवान्नभक्षणं शुभं ३७ अथ नौकाघटनमनुष्टुभाह याम्यत्रये
सौख्याय होमे शशियुग्मशेषे प्राणार्थनाशो दिवि भूतले च ३६ नवान्नं स्याच्चरक्षिप्रमृदुभे सत्तनौ शुभं विनानंदा विषघटीमधुपौषार्किभूमिजान् ३७ याम्यत्रयविशाखेंद्रसार्पपित्र्येशभिन्नभे भृग्वीज्यार्कदिने नौकाघटनं सत्तनौ शुभं ३८ मूलार्द्राभरणीपित्र्य
मृगे सौम्ये घटे तनौ रूरुखेशुके स्मेशुद्धे सिद्धिर्वीराभिचारयोः ३९ व्यन्त्यादितिध्रुवमघानिलसार्पधिष्ण्ये रिक्तेतिथौ चरतनौ वि
कवीन्दुवारे॥ ६ ॥ इति याम्यत्रयं भरणीरूपेनकारो हिष्यः ईश आर्द्रा अन्यानि प्रसिद्धानि एभ्यो भिन्ननक्षत्रेषु शुक्रगुरुवारे सत्तनौ शुभपु
नदृष्टे लग्ने नौकाघटनं नौकानिर्माणं शुभं नौकाचालनं नौकागमनमुहूर्त्तोदीपिकायां शुभाहे विष्णुर्युग्मेदुभयमेत्राश्विपाणिषु चालनं घटनं स्थानान्नावः
शुभतिथौ दुष्ट अश्विकरेज्यस धानिधिपूर्वा मित्रधनाच्युतभेषु भलग्ने तारकयोगतिथौ दुविशुद्धौ नौगमनं शुभं रशुभवारे ३८ अथ वीरसाधनाभिचारयो
मुहूर्त्तमनुष्टुभाह मूलेति मूलादिनक्षत्रपंचके तथा घटे तनौ कुंभलग्ने सौम्ये बुधे सति तथा शुक्रे कुरुखे चतुर्थे अष्टमे शुद्धे ग्रहरहितेना दृष्टे लग्ने वीरसाध
नस्य अभिचारस्य कर्मणः सिद्धिः निष्पत्तिः ३९ अथ रोगनिर्मुक्तस्नानं वसंततिलकेनाह व्यंत्येति विगतान्त्या द्वी निरेवत्यादीनि नवधिष्ण्यानि येभ्य
स्ते षडरा दशाशिष्टनक्षत्रेषु तथा रिक्तासंज्ञासु तिथिषु चरलग्ने तथा शुक्रचंद्रवर्जितवारे॥ ६ ॥ ६ ॥ ६ ॥ श्रीरुद्राय॥

मूलं अग्निः कृत्तिका दास्त्रमश्विनी एषु नवदिवसा रोगः पित्र्यभे मघायां नखाः विंशतिर्दिवसाः बुध्न्यभं उत्तराभाद्रपदा अर्यमा उत्तराफाल्गुनी पुष्य
पुरुर्वसू रोहिणी नगाः सप्त दिवसा रोगः अजवैश्वेमृगोत्तराषाढयोः मासस्त्रिंशद्दिना निरोगस्थैर्यं ततो रोगनिवृत्तिः अत्र शांतिर्वसिष्ठोक्ता नक्षत्रेशरूपं
नकेन कृत्वा तल्लिंगमंत्रैश्च सुगंधपुष्पैः वस्त्रासतैर्गुग्गुलधूपदीपनैवेद्यतांबूलफलैश्च सम्यक् पूजां च कृत्वा ऽऽमयनाशनाय द्विजाय दद्यात् तुलशिवा या
आमयो रोगः अतुलमपरिमितद्रव्य अथानंतरं यमाहि मूलभे भरण्यश्लेषा मूलेषु कृत्तिका विशाखार्द्रासु पार्थ चसप्तनक्षत्रेषु वस्य कस्य चित् फणिदंशने
दर्पदंशनेन तिभवेत् अत्र सर्पदंशयस्य एतेषु भोजरवशेन चंद्रबलेन भवति तस्यैव सर्पदंशेन चंद्रबलं न भवति तस्यैव सर्पदंशेन चंद्रबलं न भवति तस्यैव सर्प
दंशेन यत्र चंद्रस्तस्यैव गोचरे नाशभयदः तदा नूनं भवेन्मृत्युः रुपासस्तिकरे हि नदृति ४६ अथ शीघ्ररोगीमरणे विशिष्टयोगं द्वितीयोपजातिकयाह रौद्रार्द्रेति

मूलाग्निराखेन वपित्र्यभे नखा २० बुध्न्यार्यमेज्यादितिधातृभे नगाः ७। मासो ऽजवैश्वे च यमाहिमूलभे मिश्रेशपित्र्येषु फणिदंशने मृ
तिः ४६ रौद्राहिशाक्राम्बुपयाम्यपूर्वाद्विदैववस्वग्निषु पापवारे रिक्ताहरिस्कंददिने च रोगेशीघ्रं भवेद्रोगिजनस्य मृत्युः ४७ त्रिपा
हिर्मूलेंदुहरीशवायुभे प्रेतक्रिया स्यात् झषकुंभगे विधौ॥ ४७ रौद्रादिनक्षत्रेषु पापवारे सति रिक्ताः प्रसिद्धाः हरिर्द्वादशी स्कंददिनं षष्ठी एतासु

तिथिषु एवंविधे विशिष्टयोगे यस्य रोगोत्पत्तिर्भवति तस्य रोगिजनस्य शीघ्रं मृत्युर्भवेत् ४७ अथ प्रेतदाहमुहूर्ते प्रेतदाहो दिनिषिद्धं चोपद्रवं त्र्याह त्रि
प्रेति त्रिपादिनमत्रेषु प्रेतक्रियाप्रेतानां मृतानां प्रियउत्तमलोकप्राप्त्यर्थं श्राद्धादिक्रिया स्यात् यदि दाहसमये कारणवशान्नारंभ्या अथ झषकुंभगे वि
धौ मीनकुंभस्थिते चंद्रे धनिष्ठोत्तरार्धादिपंचनक्षत्रे प्रेतस्य दाहो ज्वालनं सजेत् च पुनः यमदिग्गमनं दक्षिणदिशि यमनं यात्रा तथा शय्यायाः खट्वा
याः वितानं वयनं तथा गृहगोपनं गृहाच्छादनं आदिशब्देन तृणकाष्ठसंग्रहं त्यजेत् ब्रह्मपुराणे पंचके मरणमपि निषिद्धं कुंभमीनस्थिते चंद्रे मर
णं यस्य जायते न तस्योर्ध्वगतिर्दृष्टा संतते नैशुभं भवेदिति तेन पंचके मृतस्य पंचके दाहः॥ ॥ ॥ ॥श्रीभगवत्यै नमः॥

प्रातौ सत्यां तत्पुत्तलविधिं कृत्वा दाहः कार्यः पश्चादाशौचनिवृत्यनंतरं शांतिकं कार्यम् परिपंचकमध्ये सेः प्रागेव मृतः प्रतिबंधवशात्संस्कारे दाह घाते
पुत्तलविधिमकृत्वा दाहः कार्यः अशौचनिवृत्यनंतरं शांतिर्न कार्या एवं रेवत्यंतमृतस्य रेवतीमपहाय दाहः कार्यः न पुत्तलविधिः अशौचनिवृत्य
नंतरं शांतिरेव कार्यः मरणनिषेधसह निषेधप्रतिपादकवचनद्वयसद्भावादिति ४८ अथ काष्ठानां गोमयपिंडानां च संग्रहमुहूर्त्तं शार्दूलविक्रीडितेना
ह सूर्यक्षाद्द्विसभैरिति स्पष्टार्थं ४९ अथ त्रिपुष्करयोगं सफलं वसंततिलकयाह भद्रातिथिरिति भद्रासंज्ञक तिथिर्द्वितीयासप्तमीद्वादशीशनिभौमसूर्य
वारे भवति तथा द्वीशं विशाखा अर्यमोत्तराफाल्गुनी अजचरणः पूर्वाभाद्रपदा अदितिः पुनर्वसुः वन्हिः कृत्तिका वैश्वमुत्तराषाढा एषु नक्षत्रेषुक्त ति
थिवारनक्षत्ररूपे विशिष्टयोगे सति त्रिपुष्करः त्रिपुष्कर एव त्रैपुष्करः स्वार्थेण त्रिपुष्करसंज्ञकयोगो भवति कीदृशः मृत्युविनाशवृद्धौ वैगुण्यदः ।

प्रेतस्य दाहयमदिग्गमनं त्यजेच्छय्याविताननगृहगोपनादि च ४८ सूर्यर्क्षाद्द्विसभैरधःस्थलगतैः पाकोरसैः संयुतः शीर्षेषु
ग्निभिः शवस्य दहनं मध्यं युगैः सार्यभीः धनाशादिषुवेदभैः स्वसुतहृत्स्यात्संगमो रोगभीः काष्ठादेः करणस्य खचग
दितं काष्ठादिसंस्थापने ४९ भद्रातिथी रविजभूतनयार्कवारे द्वीशार्यमाजचरणादितिवह्निविश्वे ॥ ६ ॥ २ ॥

तद्दिने यदि कश्चिन्म्रियेत तदा पापात्मपो त्रियेरन् यदि किंचिद्वस्तु विनष्टं तदा तस्य तद्वस्तुत्रयनाशः तथा किंचिद्वस्तु लब्धं तदा त्रिगुणस्तद्वस्तुलाभः वसिष्ठः ।
रविरविजभौमवारे भद्रायां विषमपादभं चेत् त्रैपुष्कराख्ययोगस्त्रिगुणफलो युगलभे द्विगुणम् पदा वियन्नक्षत्रस्यैव चरणः पूर्वराशौ चरणत्रयमपरा
शौ भवति तानि विषमचरणानि द्वीशार्यमेत्यादीनि अथ वसुधनिष्ठा नक्षत्रे चित्रा चाद्रमृगः एतानि भानि भद्रातिथयः रविशनिभौमवारेश्च अत्रापि वि
शिष्टयोगे द्विपुष्करनामयोगो भवति तत्फलम् मृत्युविनाशवृद्धौ द्वैगुण्यकृद्भवति तत्र शांतिमाह नारदः दोषात्तद्दोषनाशाय गोमयं मूल्यमेव वा द्विपुष्करे द्व
यं दद्यात्तद्दोषत्रयसमं त्रतरति अथ त्रिपुष्करे कश्यपेन रेवत्याने बहस्पतिवारेप्युक्तः ॥ ६ ॥ शिवः ॥ रामः ॥

भद्रातिथिः शनीज्यारवारे चेद्द्विपमांघ्रिभं त्रिपुष्करं त्रिगुणदं द्विगुणं द्व्यंघ्रिभं मृताद्इति इदमेव दृष्ट्वा श्रीपतिनाप्युक्तं विषमचरणंधिष्ण्यादित्यादि अत्र कश्यपवाक्ये मृतावेव त्रिगुणफलतोक्ता ग्रंथकृता तु श्रीपतिवाक्यानुरोधान्मृत्यविनाशवृद्ध्यादि युक्तं ५० अथ शवप्रतिकृतिदाहे निषिद्धकाल इंदुलविक्री डितेनाह ऋक्षेति एवंविधे दिने शवस्य प्रतिकृतिः पर्णशरादिना सावयवलकल्पनं तस्य दाहो न कार्यः कुतः द्विविधो हि प्रेत संस्कारः प्रत्यक्षशरीरस्यैकः तत्प्रतिकृतेरन्यः तत्र प्रत्यक्षशरीरसंस्कारे दिनविचाराभावः गार्ग्यः प्रत्यक्षशरीरसंस्कारे दिनं नैव विशोधयेत् इति प्रतिकृतिसंस्कारे कालत्रयं अशौचमध्ये वर्षमध्ये वर्षानंतरं चेति अशौचमध्ये क्रियते पुनः संस्कारकर्म चेत् शोधनीयं दिनं तत्र यथासंभवमेव तु अशौचविनिर्वृत्तौ चेत्पुनः संक्रियते मृतः संशोध्येव दिनं प्राज्ञ ऊर्ध्वे संवत्सरायदीति गार्ग्यवचनाद्दिनशुद्धिरुच्यते ऋक्षारा

त्रैपुष्करो भवति मृत्यु विनाश वृद्धौ त्रैगुण्यदो द्विगुणकृद्द्विकृतश्च चांद्रे ५० ऋक्षारार्किषु दर्शभूतमदने नंदाकृतीज्योग्रभेपौष्णे

वारुणभे त्रिपुष्करदिने न्यूनाधिमासेयने याम्ये त्वाष्ट्रसरतश्च पातपरिघे दैवज्ञ ऋक्षास्तके भद्रावैधृतयोः शवप्रतिकृतेर्दाहो

किं दिनेष्वर्कभौमशनिवारे शवप्रतिकृतेर्दाहो न कार्य इतित्रयेकं संबंधः दर्शोमावास्या भूतश्चतुर्दशी मदनस्त्रयोदशी ॥नपक्षे सिते ५१

नंदाः प्रतिपत्षष्ठ्येकादश्यः आसु तिथिषु तथा तीक्ष्णोग्रभे मूलार्द्राज्येष्ठाश्लेषाख्ये तीक्ष्णानि पूर्वात्रयमघाभरणीउग्राणि पौष्णं रेवती वरुण

शततारा पूर्वोक्ते त्रिपुष्करदिने न्यूनाधिमासे क्षयमासे अधिकमासे अयने याम्य अब्दात्परतः अब्दमध्ये याम्यायनेपि कार्यः नंदामदनभूता मा

पात वैधृति विष्टिषु ऋक्षार्किभौमपरिघध्रुवमिश्रोग्रमैत्रभैः कर्तुश्चेद्द्वादशेराशे जन्मप्रत्यरितारिके त्रिपाद्भे सितपक्षेयने याम्ये ऽब्दतः परम् श

वप्रतिकृतेर्दाहः ऋक्षेज्यास्ताधिमासके नेष्टो मध्यो द्विपान्मैत्रहीशादिति भगध्रुवे इति निबंधोक्तेः दिनक्षयोपि वर्ज्यः वर्जयेत्तु दिनक्षयमिति गार्ग्योक्तेः रामः

पातपरिघपातो व्यतीपातो महापातश्च परिघश्च एतेषु दाहो न कार्यः दैवज्ञ ऋक्षास्तके दाहो न कार्यः भद्रायां वैधृतौ च तथा सितशुक्लपक्ष इति ५१ ॥ २५

अथतेनैवचं दूसावर्ज्यैत्तराण्याह जन्मप्रत्यरितारयोरिति कर्त्तुः जन्मप्रत्यरितारयोः जन्मताराउत्पत्तिनक्षत्रं दशममेकोनविंशं चेति प्रत्यरि ग राजन्मभात्संचम चतुर्दश्यं चयो विंशनक्षत्रे तथाकर्त्तुर्मृतिसरवां तेज्ञे अष्टम चतुर्थद्वादश स्थं चंद्रे सति दाहो न सत् नप्रशस्तः अथमध्यमनक्षत्राणि मैत्रमनुराधा भगः पूर्वाफाल्गुनी अदितिः पुनर्वसुः ध्रुवाणि रोहिण्युत्तरात्रयं विशाखाहस्ताग्निभंमृगचित्राधनिष्ठाः ज्ञबुधेपि श्रवद्राहोमध्यमः अथोत्तमानि अर्केज्याभ्यासहितो विधुः अर्के गुरुचंद्रवारे तथाश्रवणहस्तस्वाती अश्विनीपुष्येषु पंचनक्षत्रेषु शवप्रातिकूलेनदाहः श्रेष्ठः इदमस्ति लमाशौचात्परतः अनंतरं मध्येतुयथासंभवं किंविदुणामीकारेणविचार्यं ५२ अथमूलनक्षत्रजातस्य विशेषमुपजातिकयाह अभुक्तमिति नारदः अभुक्तमूललक्षणं ज्येष्ठांत्यमूलादिभवं घटीचतुष्कं जन्मो ज्येष्ठात्यघटी चतुष्टयं मूलादि घटीचतुष्टयं चेत्यर्थः नारदः योज्येष्ठामूलयोरंतरालप्र

जन्मप्रत्यरितारयोर्मृतिस्करवां त्येऽज्ञे च कर्त्तुर्नेत्सन्मध्यो मैत्रभगादितिध्रुवविशाखादाग्निभेज्ञेऽपि च श्रेष्ठोऽर्केज्यविधोर्दि
नेश्रुतिकरस्वात्यश्विपुष्ये तथात्वशौचात्परतो विचार्यमखिलं मध्ये यथासंभवं ५२ अभुक्तमूलं हि घटीचतुष्टयं ज्येष्ठांत्य
मूलादिभवं हि नारदः वसिष्ठएकद्विघटीमितं जगौ बृहस्पतिस्त्वेक घटीप्रमाणकम् ५३॥

हस्जः शिशुः अभुक्तमूलजः सार्पमघानक्षत्रयोरपि अयमेवमुख्यः पक्षः कश्यपारिवडुमुनिसंवादात्तुकश्यपः ज्येष्ठांत्यमूलयोरंतरालपानोद्भवः शिशुः अभुक्तमूलजः सोयत्वाश्लेषापित्र्ययोरपि वसिष्ठोपि भुजंगपौ रंद्ररपौष्णभान्वंतरयग्रभानां चतराल अभुक्तमूलं प्रहरप्रमाणं त्यजेत्क तं तत्र भवा कृतां चेति वसिष्ठएकद्विघटीमितं जगौ ज्येष्ठांते एकघटिकामूलाद्यघटिकाद्वयमित्यर्थः इदं वसिष्ठेन केचिन्मतेमुक्तम् येकस्तहाकेंके चित् अपरे इतिप्रोक्तेः तद्वान्यच ज्येष्ठात्यपादघटिकामित्तमेवकेचिन्मूलं त्वभुक्तमपरे पुनराममनंति मूलाद्यपाद्यघटिका द्वितयेन सार्द्धमष्टौसमाः परिहरेदिह जन्मभाज इति। बृहस्पतिस्त्वेकघटीप्रमाणकं जगौ ज्येष्ठांत्यार्धघटिकामूलाद्या चार्धघटिके त्यर्थः गुरुः ज्येष्ठांत्यघटिकार्धं च मूलादौ घटिकार्धकं तयोरंतर्गतानाडीद्वयभु

अथान्येआचार्याउपजातिकयाहुः अथोचुरन्यइति आचार्याःप्रोचुः मूलस्यप्रथमा अष्टघटिका शाक्रस्यज्येष्ठायाः अंतिमाःपंचनाडिकाएवमु
भयोरंतरालेत्रयोदश घटिका अभुक्तसंज्ञकाः प्रोचुः उक्तंचज्येष्ठांत्याघटिकाःपंचमूलाद्यावस्फनाडिकाः अभुक्तमितितज्ज्ञेयंतत्रजातंशिशुंत्यजेत्
तितत्फलमाह तत्राभुक्तमूलेजातंशिशुंबालंबालोवापितापरित्यजेत्त्यागाशक्तौवापिता अस्यबालस्याष्टसमाः अष्टौवर्षाणिमुखंनपश्येत् नारदःअ
भुक्तमूलजंपुत्रंपुत्रीमपिपरित्यजेत् अथवाब्दाष्टकंतातस्तन्मुखंनविलोकयेदिति अत्रघटीनांन्यूनाधिककथनंदोषस्याधिक्याल्पत्वकथनार्थंज्ञेयं ५४
अथमूलाश्लेषाजातस्यचरणवशेनफलमुपजातिकयाह आद्येपितेति मूलप्रथमचरणेजातस्यबालस्यपितानाशंप्राप्नोति द्वितीयचरणेजननीमा
तानाशंप्राप्नोति सापत्नमातरिमातृशब्दोगौणः तेनगौणमुख्ययोर्मुख्येकार्यसंप्रत्ययइतिजननीपदप्रयोगः तृतीयचरणेधनंनश्यति चतुर्थचरणेबाल

अथोचुरन्येप्रथमाष्टघट्योमूलस्यशाक्रांतिमपंचनाड्यः जातंशिशुंतत्रपरित्यजेद्वास्यमुखंपितास्याष्टसमा
नपश्येत् ५४ आद्येपितानाशमुपैतिमूलपादेद्वितीयेजननीतृतीये॥ छं ॥

स्यक्रमः अत्रविशेषोनारदेनोक्तः दिवा
जातस्तुपितरंरात्रौतुजननींतथा आत्मानंसंध्ययोर्हंतिनास्तिगंडोनिरामयः वसिष्ठस्तु मूलाद्यपादेपितृहाराात्रिभागेतदात्मनोनास्तिपितुर्विनाशः द्वितीय
पादेदिनेमातृहास्यान्नमातुरस्यांपितरास्तिदोषः अथानंतरं शान्त्यम् लाश्लेषाद्यांत्यास्वनुष्ठितयासर्वत्रचरणचतुष्टयेपिक्रमम् अनिष्टफलनाशकक
ल्याणंस्यात् शास्त्रोक्तरीत्यास्वलुस्तकान्तेमासेतृतीयेप्यथवत्सरान्तेइति कालत्रयंवसिष्ठेनोक्तंगंडेतुविशेषः मातृगंडेस्तंजातंसुतकांतेविचक्षणः कुर्याच्छां
तितरसेवातदोषस्याप्यनुत्तये शिष्टास्तुसर्वत्रापियत्नस्तत्रेजन्मनक्षत्रवशांतिरितिव्यवहरंति अथाहिभेविलोममिति आश्लेषायांमूलपादोक्तंफलंविलो
मंविपरीतंज्ञेयम् मूलस्यप्रथमपादेपितृनाशइत्युक्तंसोश्लेषाचतुर्थपादेस्यात्तस्यद्वितीयपादेमातृनाशःसाश्लेषातृतीयचरणेमूलेतृतीयचरणेधननाशउक्तः
सोश्लेषाद्वितीयचरणेचतुर्थचरणेबालमरणम् ॥ ५ ॥

तदाश्लेषाप्रथमचरणेज्ञेयम् अत्रवृक्षविचारोस्तिग्रन्थभूयस्त्वभयान्नलिख्यते अथकैश्चिन्मूलवृक्षादिविचारउक्तः जयार्णवेतन्मूलंस्तंभत्वक्
चाशाखापत्रंपुष्पंफलंशिखामुनयोऽष्टौदिशोरुद्राःसूर्याःपंचाब्धयोगनयः मूलेतुमूलनाशःस्यात्स्तंभेवंशविनाशनं त्वचिमातुर्भवेत् क्लेशः
शाखायांमातुलस्यचपत्रेसज्यंविजानीयात् पुष्पेमंत्रिपदंस्मृतंफलेचविपुलालक्ष्मीः शिखायामल्पजीवितं अथमूलपुरुषयोगेघटिकान्यासस्तत्रैव ।
मूलस्यघटिकान्यासोमूर्ध्निपंचनृपोभवेत् मुखेसप्तमृतिःपुत्रःस्कन्धेवेदामहाबलः बाह्वोरष्टौवशीपाण्योस्तिस्रोहत्यान्वितोभवेत् हृदिखेटाभूपस्
त्रीनाभौद्वौब्रह्मविद्स्याद्गुह्येदशातिकामीस्याज्जानुनोःषण्महामतिः पादयोःषट्मृतिस्तस्येत्युक्तावानुक मलासनइति अथमूलोद्भूतंकन्या
याःफलार्थंमूलांगविभागस्तत्रैव चतस्रोनाडिकाःशीर्षेकुर्वंतिपशुनाशनं मुखेषट्ध निहानिः स्यात्कंठेपंचधनागमः कौटिल्यंहृदयेपंच
बाह्वोर्वित्तागमस्ततःवेदाःपाण्योर्दयाधर्मवेदागुह्येतिकामिनीज्येष्ठमातुलनाशश्चजंघयोर्युगनाडिकाज्येष्ठभ्रातृविनाशश्चचतस्रोजानुयु।

धनंचतुर्थांस्यश्रमोथशांत्यासर्वत्रसत्स्यादहिभेविलोमं ५५ स्वर्गेशुचिप्रोष्ठपदेषुमाघेभूमौनभःकार्तिकचैत्रपौषे॥ ॥

स्यके पादयोर्दशनाड्यश्चतत्रैवधन्यमादिशेत् इतिमूलप्रस्तावमुनिभिःफलमीरितं अथाश्लेषाजातयोःपुत्रकन्ययोरंगविभागेनफलंतत्रैव ॥
मूर्ध्निपंचस्कराज्याप्तिर्मुखेसप्तपितृक्षयः नेत्रेद्वेजननीनाशःग्रीवायांत्रिषुलंपटः स्कंधेवेदागुरोर्भक्तिःहस्तेऽष्टौचबलीभवेत् हृद्येकादशभिश्चा
त्मघातीसंजायतेनरः स्त्रीवानाभौभ्रमःषड्भिर्गुह्येनवतयोधमःपादेपंचधनंहंतिसार्पादितत्फलंक्रमात् अथाश्लेषावृक्षोपितत्रैवोक्तः फलंपुष्पंद
लंशाखात्वग्लताकंदएवच सार्पवल्यांदशाशाकखरविश्वार्कसागराःनाडिकास्तद्ववेबालेफलंज्ञेयंयथाक्रमं श्रीःश्रीराजभयंहानिःमातृपित्रा
त्मसंक्षयइति अयंविभागोनक्षत्रस्यषष्टिघटिकात्मकोज्ञेयः न्यूनातिरिक्तेअनुपातः ५५ अथमूलनिवासस्फलमिद्रवज्र्याह स्वर्गइति शुचिस
षाढः प्रोष्ठपदोभाद्रपदःइषआश्विनःमाघःप्रसिद्धःएषुमासेषुमूलनक्षत्रेस्वर्गेऽस्ति श्रावणकार्तिकचैत्रपौषेषुभूमौतिष्ठति॥ छ ॥ ॥रामः

मु.दी. तपस्यः फाल्गुनः शुक्रो ज्येष्ठः फाल्गुनमार्गशीर्षवैशाखज्येष्ठेषु अधःपाताले मूलं तिष्ठति तत्फलं च यदा मूलनक्षत्रं यस्मिन्मासेपत्र भवति तत्रै
न.प्र. व स्वर्गमर्त्यपातालेषु एवमुक्तं शुभाशुभफलं ददाति तेन इत्याद्यभावे स्वर्गपातालस्थे मूले दोषाभावाच्छांतेरनावश्यकत्वं ज्ञेयं यदा तु भूमावेव मू
२७ लं तदा शांतिरवश्यं विधेयेति शक्तेन उक्तं च ज्योतिषार्णवे भूमिष्ठे दोषबहुलं स्वल्पमन्यत्र संस्थितमिति ज्योतिर्निबन्धे मूलाश्विपित्र्य चरणप्रथमे
च नूनं पौष्णैंद्रयोश्च फणिनश्च तुरीयपादे मातुः पितुः स्ववपुषोपि करोति नाशं जातो यदा निशि दिनेप्यथ संध्ययोर्वेति तत्रापि शांत्याशुभं भवतीति द्वितीयं
५६ अथ मूलप्रसंगाद्दुष्टेषु गंडांतादि निमित्तेषु जातस्यारिष्टपरिहारं वशार्दूलविक्रीडितेनाह गंडांतेंद्रभेति एतेषु शिशोरुत्पत्तिर्नेष्टा दुष्टफल
दा गंडांतं तिथिनक्षत्रलग्नानां संधिः तल्लक्षणं ज्येष्ठापौष्णभेत्यादिना वक्ष्यति इंद्रभं ज्येष्ठानक्षत्रम् शूलयोगः पातो महापातः परिघव्याघातगंडयो

मूलं त्वधस्तात्तु तपस्यमाघवैशाखशुक्रेष्वशुभं च तत्र ५६ गंडांतेंद्रभशूलपातपरिघव्याघातगंडावमेसंक्रांतिव्यतिपातवैधृति
तिसिनीवालीकुहूदर्शके वज्रे कृष्णचतुर्दशीषु यमघंटे दग्धयोगे मृतौ विष्टौ सोदरभे जनिर्पितृभे शस्ताशुभा शांतितः ५७ ॥

मा: अवमस्तिथिक्षयः संक्रांतिः सूर्यसंक्रमणपुण्यकालः व्यतीपातवैधृतीयोगौ सिनीवाली दृष्टेंदुरमावास्या कुहूर्नष्टेंदुरमावास्या सा दृष्टेंदुः सिनी
वाली सा नष्टेंदुकला कुहूरित्यभिधानात् दर्शश्चंद्रदर्शनरहितामावास्या एतद्दूरे दोषे प्रतिपादयिष्यते वज्रे वज्रयोगे कृष्णपक्षचतुर्दश्यां यमघंटे
मघाविशाखेत्युक्तं दग्धयोगे सूर्येशपंचाग्निरसाष्टनंदा इत्युक्तेः मृतौ द्वीशनतोयादित्युक्ते मृत्युयोगे विष्टौ भद्रायां सोदरर्क्षे भ्रातृभगिन्यो जनर्क्षे
पितृभे माता च पिता च पितरौ तयोर्भे मातृभे पितृभे च एषु निमित्तेषु सुतस्य सुताया वा जन्म चेत्स्यात्तदा निष्टकृत्स्यादित्यर्थः दुष्टनिमित्तस्योपलक्षण
त्वात् त्रीतरजन्माप्यनिष्टम् सजातीयापत्यप्रसवानंतरं विजातीयापत्यप्रसवस्त्रीतरः यथा पुत्रत्रयप्रसवानंतरं कन्याजन्म कन्यात्रयप्रसवानंतरं पुंजन्म
सा जनिः शांतितः वसिष्ठादिप्रोक्तशांत्या स्वनुष्ठितया शुभा परिणामसुखदायिनीत्यर्थः ५७ ॥ ५७ ॥ ५७ ॥ श्रीमहाकालीमहालक्ष्मीमहास- एम:
२७

अथशांतयोलिख्यंते तत्रप्रथमंमूलशांतिरुच्यंते शौनकउवाच अथातःसंप्रवक्ष्यामि मूलजातहितायच मातापित्रोर्धनस्यापिकुलेशांतिहितायच जात
स्यद्वादशाहेतुजन्मर्क्षेवाशुभेदिने समाष्टकेवामतिमान्कुर्याद्वाशांतिमादरात् वसिष्ठः सुसमेपुण्यदेशेतुमंडपकारयेद्बुधः कुंडंचतद्बहिःकुर्याद्गृहयज्ञोक्तमा
र्गतः पंचामृतपंचगव्यपंचत्वक्पल्लवानिच उदुंबरवटाश्वत्थप्लक्षाम्रलकुसपल्लवाः शतौषधीमूलशंखनवरत्नानिमृत्तिकाः कुष्ठमांसीहरिद्रेद्वेमुराशैलेयं
चंदनं वचाचंपकमुस्ताचसर्वौषध्योदशैवहि गजाश्वरथ्यावल्मीकसंगमस्थानसंभवा ह्रदगोराजनगरद्वारतश्चाष्टमृत्तिकाः शतौषधीमूलानिच
अश्मरी १ सहदे २ अपराजिता ३ मुण्डा ४ उशीर ५ बाला ६ अधःपुष्पी ७ शंखपुष्पी ८ ज्येष्ठीमधु ९ कोरकः १० चक्रांकिता ११ विष्णुक्रांता १२ शिव
कान्ता १३ मयूरशिखा १४ काकजंघा १५ भृंगराज १६ कुमारी १७ हय १८ कर्णिकार १९ अपामार्ग २० विल्वं २१ षण्मूला २२ अम्बुज २३ उत्तरा २४
पुत्रजीव २५ दूर्वा २६ काश २७ कुश २८ साल २९ ताल ३० चक्रमर्द ३१ सिंही ३२ व्याघ्री ३३ अर्क ३४ प्लक्ष ३५ पलाश ३६ पिप्पल ३७ वट ३८ उदुं
बर ३९ तुलसी ४० उत्पल ४१ शतपत्र ४२ अतसी ४३ सारिवा ४४ कदंब ४५ बकुल ४६ शमी ४७ राहिक ४८ निर्गुंडी ४९ मुंडी ५० दण्डी ५१ [illegible] ५२
अशोक ५३ सूर्यभक्ता ५४ रुद्रजटा ५५ कदली ५६ बीजपूरकं ५७ मदनक ५८ मुसली ५९ पुनर्नवा ६० आम्र ६१ पाटल ६२ श्रीपर्णी ६३ करवीर।
६४ चंपकं ६५ गुडूची ६६ देवदारु ६७ अगरु ६८ चंदन ६९ कुटज ७० शिग्रु ७१ हरिद्रा ७२ जटामासी ७३ वचा ७४ कुष्ठ ७५ तज ७६ दारुहरिद्रा।
७७ बन्धुजीव ७८ सिंधुवार ७९ सटी ८० अश्वगन्धा ८१ मुस्ता ८२ कुरंटक ८३ पनस ८४ जीवक ८५ जाती ८६ मालती ८७ मधूके ८८ खदिर ८९
सप्तच्छद ९० सिरीष ९१ काकमाची ९२ शतावरी ९३ केतकी ९४ जंबू ९५ शाक ९६ वेतस ९७ आमलक ९८ सरल ९९ गिरिकर्णी १०० इति तिलमाष।
यवव्रीहिगोधूमानिप्रियंगवः चणकैःसहितासप्तसद्बीजानिचसर्वदा वज्रमौक्तिकवैडूर्यपुष्परागेंद्रनीलकं पंचरत्नमिदंप्रोक्तंमंत्रैःकुंभेषुनिक्षिपेत्।
सुवर्णेनप्रमाणेनतदर्धार्धेनवापुनः। नैर्ऋतिप्रतिमांकुर्याद्द्विजशाठ्यविवर्जितः अत्रविशेषः शौनकेनपलमानेनवार्धेनपादेनाथस्वशक्तितः नक्षत्रदे
वतारूपंकारयित्वाविचक्षणः यद्वाम्रसंस्कृवर्णस्यस्थापयित्वाप्रपूजयेत् सुवर्णंसर्वदैवत्यंसर्वदेवात्मकोनलः सर्वदेवात्मको विप्रःसर्वदेवमयोहरिरिति

मु॰टी॰
न॰ग्र॰
२९

वस्त्राणि षोडशाशे च शुक्लसूक्ष्माण्यतंद्रितः ब्राह्मणान्वरयेत्पश्चात्स्वस्तिवाचनपूर्वकं श्रोत्रियांश्चतुरोवाष्टौ द्वादशाथवा षोडश प्रधानाचार्यमेतेषां श्रे
ष्ठं तस्तातिमार्चने ईशानादि चतुःकोणेष्वव्रणान्जलपूरितान् पूर्वोक्तद्रव्यसंयुक्तान् स्थापयेद्रक्तवर्णकान् विधानेपृथक्पृथक् चापि मधुपर्कादि
नार्चयेत् द्वारपूजायकानष्टौ द्वौ द्वौ च वरयेत्पुनः अग्निर्गैवारुणैर्मंत्रैः फलपुष्पाक्षतादिभिः तत्तत्कुंभे जलस्पृष्ट्वा कुशकूर्चैर्जपेदिति रुद्रसूक्तं च भद्राग्नि
रानोभद्राङ्गतिक्रमात् पुरुषसूक्तं च तन्मंत्रैर्देवान्ध्यात्वा प्रयत्नतः गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् पंचगव्यमिदं कुंभे क्षिपेत्तज्जपसान्वितम् र
जतं काचनं वा मृद्विद्रुमं तीर्थवारि च निक्षिपेद्धेममूलं च दशाष्टयवनिर्मितं देवदारु च शैलेयं पद्मनीलोत्पलं तथा वचालोध्रं प्रियंगुं च कुष्ठं तच्छि
द्रघटे क्षिपेत् वंशपात्रोपरिन्यस्तं शतछिद्रघटे स्थितं ततश्च निर्ऋतिरेवमर्चयेत्सश्विमासुख मोषुणस्त्विति मंत्रेण फलवस्त्राक्षतादिभिः स्थूलरूपवि
धानव्यशामं कृष्णपवाहनं खड्गघटधरं वामे द्विभुजं च वृकाननम् स्थापयेत्तत्र हाश्चैव वस्त्रगंधादिभिर्यजेत् वरुणं च प्रपयेत्तत्र नैर्ऋतं तद्[illegible]त्वा एह
तत्र चत्वारः कुंभाश्चतुर्दिक्षु स्थाप्याः एकः कुंभो रुद्रस्थापनार्थमन्यः स्थाप्यः एकः शतच्छिद्रः कुंभः तस्मिन्कुंभे देवदारु शैलेयमित्याद्यौषधानि तथा
स्कवर्णमूलं अष्टादशयवपरिमितं निक्षिप्य तदुपरि वंशादिपात्रं निधाय तत्र निर्ऋतिप्रतिमां द्रुमप्रतिमां जलप्रतिमासहितां स्थापयेत् ततः षोडशो
पचारैः पंचोपचारैर्वा पूजयेत् उक्तं च शौनकेन पुण्यैरभिर्मेश्वितैः तोयैः प्रोक्षितायां क्षितौ ततः तेनोदकुंभं सूक्ष्मं श्लक्ष्णं रक्तवर्णं विवर्जितं अकृष्णमूलं
निर्णिक्तं पूजयेन्निर्मलांभसा आकलशेष्वित्यनया कलशस्थापनं शुभं इमं म इति मंत्रेण पूरयेत्तीर्थवारिणा कुंभं च वस्त्रगंधाद्यैः स्तत्तन्मंत्रैः प्रपूजयेत्
याः फलिनीरित्यनया क्षिपेद्रत्नौषधादिकं वस्त्रावगुंठितं कुर्यात्पूरयेत्तीर्थवारिणा कूर्चं हेमसमायुक्तं वृतपल्लवसंयुतं स्वस्तिकोपरि विन्यस्य क्षीरद्रुम
सपल्लवैः द्रोणव्रीहींश्च निक्षिप्य ईशाने च निधापयेत् पंचरत्नानि निक्षिप्य सर्वौषधिसमन्वितम् अर्चितं गंधपुष्पाद्यैः श्रीरुद्रं तत्र संजपेत् तत्र
निरस्यसूक्तं शतरुद्रानुवाककम् रक्षामंत्रं तथा पुण्यं रक्षोघ्नं च स्पृशं जपेत् एवं कं जयेत्तस्य गंष्ठोत्तरसहस्रकम् एकवारं तथा जापी पावमानीस्पृशं जपे
त् जपसंपंच कुंभाश्च रुद्रं पंवातद्रलाभतः श्रीरुद्रस्यैककुंभं च सर्वसूक्तानि तन्त्रतु तथान्यं पंचमं कुंभं पूर्वोक्तैर्लक्षणैर्युतम् चतुःप्रस्रवणं कुर्यात्संचवक्कचल

२८

इवेत् वस्त्रावगुंठितंकुर्यात्पूरयेत्तीर्थवारिणा पंचरत्नसमायुक्तनाम्रपल्लवसंयुतं एतस्मिन्नपिपंचरत्नसप्तमृत्तिकाशतमूलदेवदारुप्रभृतीमा
धूहेमन्मूलानिक्षिपेत् तत्रशतमूलालाभे विष्णुक्रांतासहदेवीतुलसीशतावरी मूलानीमानिगृण्हीयात्तत्ताभेविशेषतः तस्योपरिन्यसेत्पात्रं
पंवारोप्यमृन्मयं शुद्धवस्त्रेणसंच्छाद्यशतमूलानिनिक्षिपेत् कुंभोपरिन्यसेद्धिद्वान्मूलनक्षत्रदेवतम् अधिप्रत्यधिदेवौचदक्षिणोत्तरदेशयोः
दैवंअधस्तोज्येष्ठानक्षत्रदेवतम् एवंप्रत्यधिदेवंचपूर्वाषाढर्क्षदेवतम् स्वलिंगोक्तैश्चमंत्रैश्चप्रधानादीन्प्रपूजयेत् पंचामृतेनसंस्नाप्य आवाह्या
यसमर्चयेत् उपचारैः षोडशभिर्येद्वापंचोपचारकैः रक्तचंदनगंधाद्यैः पुष्पैः कृष्णासितादिभिः मेषशृंगादिधूपैश्चघृतदीपैस्तथैवच कृसरापोलिक
मांसाद्यैः नैवेद्यैर्भोजनादिभिः मत्स्यमांससुरादीनि ब्राह्मणानां विवर्जयेत् कृसरास्थानेप्रदातव्यं क्षीरंसैंधवमिश्रितम् पायसंलवणोपेतंमासस्थाने
प्रकल्पयेत् उक्तगंधाद्यलाभेतुयथालाभंसमर्चयेत् पुष्पांतंतुसमभ्यर्च्यहोमंकुर्याद्यथोदितम् निर्वापप्रोक्षणादीनिचरोः कुर्याद्यथाविधि हवि
र्गृहीत्वाविधिवन्नेवैत्यैवंकृत्वाद्गुनेत् अत्रवसिष्ठेनविशेषोभिहितः मूलंप्रजामितिमंत्रहृदयस्यकण्वऋषिर्निर्ऋतिर्देवता अनुष्टुप्छंदः मूलस्याभि
हा प्रजापतयेस्वाहेत्युपहोममंत्रौ पलाशसमिदाज्येनचरुणाष्टसहस्रकम् अथवाष्टोत्तरशतप्रत्येकंजुहुयात्ततः मूलंप्रजामित्यष्टाभिर्वाकुमंत्र
त्र्यंबकेनच सावित्र्यासौम्यनैर्ऋत्यमंत्रैरश्वत्थसंभवैः समिद्भिश्चातिलव्रीहीन्हुत्वाव्याहृतिभिस्ततः मूलंप्रजामित्यष्टौवाकयान्यर्चकोजपेत् ॥
अष्टोत्तरसहस्रंवाशतंवानियतात्मवान् अथहोमप्रकारस्तुशाखांतरविषयोध्येयः मोषुणः परापरितियत्तेस्वैतिप्रागुत्तरपायसंघृतसंमि
श्रंहुनेदष्टोत्तरंशतम् समिदाज्यचरून्यश्चाद्धुक्तितः संख्ययाहुनेत् अधिदेवतयोश्चैवजुहुयात्स्वस्वमंत्रकैः नक्षत्रदेवताप्यश्चपायसेनतु
होमयेत् कृणुष्वेतिपंचदशभिर्जुहुयात्कुसरंततः गायत्र्याजातवेदसेत्र्यंबकमितिक्रमात् सीरायुंजंतितासगिनवास्तोष्पतेमिसेवच ॥
क्षेत्रस्यपतिनानागृणानाग्निंहुतंतथैवच श्रीसूक्तेनतथाविद्वान्समिदाज्यचरूंस्त्रमात् अष्टोत्तरशतेवाथअष्टाविंशतिभिः क्रमात् अ
ष्टाष्टसंख्ययावापिजुहुयाच्छक्तितोबुधः त्वन्नःसोमेनपायसंजुहुयात्त्रयोदश चतुर्गृहीतमाज्यंचयातेरुद्रेतिमंत्रतः स्रुवेणजुहुयात्संख्यं

मु.दी.
न.श.
२९

महाव्याहृतिभिःक्रमात् हुत्वास्विष्टकृतंपश्चात्प्रायश्चित्ताहुतीर्हुनेत् आचार्योयजमानोवा अग्नौपूर्णाहुतिंहुनेत् होमशेषंसमाप्याथवह्नि
मारोपयेत्ततः कुंभाभिमंत्रणंकुर्याद्दक्षिणेनाभिमंत्रयेत् मृत्युघ्नंमनसाध्याय जपेत्त्र्यंबकंशतम् रुद्रकुंभोक्तमार्गेणरुद्रमंत्रंस्पृशञ्जपेत् अपरो
पंचनैवेद्यंकुंभयुग्मेनिवेदयेत् प्रसादयेत्ततोदेवमभिषेकार्थमादरात् भद्रासनोपविष्टस्ययजमानस्यऋत्विजः दारपुत्रसमेतस्यकुर्युःसर्वेभिषेच
नम् अक्षीभ्यामितिसूक्तेनपावमानीभिरेवच आपोहिष्ठेतिनवभिरापइद्वाहृयेनच सहस्राक्षेणचेनापिदेवस्यत्वेतिमंत्रकैः शिवसंकल्पमं
त्रेणवक्ष्यमाणैश्चमंत्रकैः योसौवज्रधरोदेवोमहेंद्रोगजवाहनः मूलजातशिशोर्दोषंमातापित्रोर्व्यपोहतु योसौशक्तिधरोदेवोहुतभुङ्मेषवा
हनः सप्तजिह्वश्चदेवोग्निर्मूलदोषंव्यपोहतु योसौदंडधरोदेवोधर्मोमहिषवाहनः मूलजातशिशोर्दोषंव्यपोहतुयमोमम योसौखड्गधरोदेवो
निर्ऋतीराक्षसाधिपः प्रशामयतुमूलोत्थंदोषंगंडांतसंभवम् योसौपाशधरोदेवोवरुणश्चजलेश्वरः नक्रवाहःप्रचेताख्योमूलोत्थावद्यंव्यपोहतु
योसौदेवोजगत्प्राणोमारुतोमृगवाहनः प्रशामयतुमूलोत्थंदोषंबालस्यशांतिदः योसौनिधिपतिर्देवःखड्गभृन्नरवाहनः मातापित्रोःशिशोश्चैवमूलदो
दोषंव्यपोहतु योसौपशुपतिर्देवःपिनाकीवृषवाहनः आश्लेषामूलगंडांतंदोषमाशुव्यपोहतु विघ्नेशःक्षेत्रपोदुर्गालोकपालानवग्रहाः सर्वदोषप्र
शमनंसर्वंकुर्वंतुशांतिदाः तच्छ्रेयोऽभिषेकंतुसर्वदोषोपशांतिदम् सर्वकामप्रदंदिव्यंमंगलानांचमंगलम् स्नातःशिवकुंभाभ्यांपश्चात्तुस्नापयेद्गु
पः ततःशुक्लांबरधरःशुक्लमाल्यानुलेपनः यजमानोदक्षिणाभिस्तोषयेदृत्विगादिकान् धेनुंपयस्विनींदद्यादाचार्यायसवत्सकाम् निष्क
तिप्रतिमांकुंभवस्त्रंहेमंचदापयेत् ग्रहार्थवस्त्रप्रतिमास्तस्मैदद्यात्सयत्नतः श्रीरुद्रजापिनेदेयःकुंभोनड्वान्प्रयत्नतः तत्कुंभवस्त्रप्रतिमास्त
स्मैदद्यात्सयत्नतः उक्तालाभेततोदद्यादाचार्यब्रह्मऋत्विजाम् तत्तन्मूल्यंप्रदातव्यंशक्त्यावाथप्रदापयेत् दद्यात्स्वपायसादिब्राह्मणान्भोज्य
च्छक्तं अलाभेसतिपंचाशद्दशकंतदलाभतः सर्वशांतेश्चपठनमेतच्छिष्यग्रहणंतथा गृहीसमाप्ययेद्विहान्निऋतिःप्रीयतामिति इतिशौनकीये मू
लशांतिः अथाश्लेषाशांतिरप्येवमेवकार्या तत्रविभवेपूर्वोक्तवत्संचकुंभास्थाप्याः असंभवेकुंभद्वयम् एकत्ररुद्रस्थापनम् ॥ ॐ ॥

कर्मसंस्कारवशेनचंद्रस्यादृश्यत्वमागतंस्यामावास्यासंपूर्णाकुहूर्नाम चंद्रादर्शनलक्षणसत्वात् तत्रापिकुहूशांतिरादेश्या यस्तुसूर्योदयादनं
तरंकियतीषुद्वित्रासुघटीषु अतिक्रांतासु अमावास्यावर्तते पूर्वचतुर्दश्यांदृश्यत्वात्स्यामुपसिद्धकर्मवशतश्चंद्रेदृशोभावादर्शितथाप्यमावास्यायां
दर्शनलक्षणानाक्रांतत्वात्तांसंपूर्णामावास्यांदर्शोनाम तत्रदर्शजननशांतिर्विधेयेति एवममावास्याभेदेनसिनीवालीकुहूदर्शरूपंप्रसूत्रयंसावकाशमि
तिगीलिलानामतम् अथप्रकारांतरेणसिनीवालीसर्ववादिसिद्धासैव कुहूस्तुपारिभाषिकी यदाहवसिष्ठः नक्षत्रेयस्यदर्शान्तोविषनाड्याभवेद्यदि कुहू
योगइतिख्यातोव्याधिमृत्युभयादिकृत् अयमर्थः यस्मिन्नक्षत्रेयाविषनाड्युक्तास्तस्मिन्कालेयदिदर्शस्यचरमघटिकाभवेत्तन्नक्षत्रेचयस्यप्रसू
स्यजन्मनक्षत्रजन्मकालेकालांतरेवास्यात्तस्यप्रसोव्याधिमृत्युकृत् कुहूयोगोज्ञेयः तत्रकुहूजननफलेशांतिश्चस्यात् कालांतरेपिकुहूयोगसंभवे।
शांतिर्विधेया अतएवजगन्मोहने यस्यजन्मर्क्षगश्चंद्रोविषनाड्यांकुहूभवेत् अभिचारेणकिंतस्यस्वयमेवमरिष्यतीति अतोविषघटि
कातःपूर्वंकालोदर्शशब्दवाच्यइति एवंप्रकारत्रयेणसिनीवालीकुहूदर्शोनीमेदउपादितस्तत्रयथासंप्रदायंव्यवस्थेत्यलमतिप्रसंगेन
अथशांतिप्रकारः सिनीवाल्यांप्रसूतास्याद्यस्यभार्यापशुस्तथा गवाश्वमहिषीचैवशक्रस्यापिश्रियंहरेत् येवसंतिद्विजाश्चान्येस्वप्र
सादेम्मजीविनः वर्जयेत्तानशेषांस्तुपशूनपक्षिमृगादिकान् द्विजाःपक्षिणः कुहूप्रसूतिरत्यर्थंसर्वदोषकरीमता यस्यप्रसूतिरेतेषांतस्यायु
र्धननाशिनी नारीविनाचशेषाणांपरित्यागोविधीयते परित्यागात्तत्रशांतिकुर्याद्वैत्याविचक्षणः प्रतिमाकारयेच्छंभोश्चतुर्भुजसमन्वितम्।
त्रिशूलखड्गवरदाभयहस्तांयथाक्रमात् श्वेतवर्णाश्वेतपुष्पाश्वेतस्रग्भूषस्थिता त्र्यंबकेनमंत्रेणपूजांकुर्याद्यथाविधि रुद्रश्चतुर्भुजोवज्रंकुश
चापससायकः रक्तवर्णोगजारूढोयतइंद्रेतिमंत्रतः पितरःकृष्णवर्णाश्चचतुर्हस्ताविमानगाः पद्मसूत्रकमंडलभयानांचधारिणः येसमानाइति
मंत्रेणपूजांकुर्यादनंतरम् कलशस्थापनपूजादिपूर्ववत् समिदाज्यचरुहोमंतिलमाषेश्चसर्षपैः अश्वत्थप्लक्षपालाशसमिद्भिःखादिरैःशुभैः अष्टो
त्तरशतंमुख्यंप्रत्येकंजुहुयाद्बुधः त्र्यंबकेनमंत्रेणतिलान्व्याहृतिभिर्घृतेन शंकरस्याभिषेकंचकुर्याद्राज्यावलोकनम् अन्यत्सर्वमभिषेकादिपूर्ववत्

मु॰ दी॰
मञ्ज॰
३२

इति सिनीवालीकुहूशांतिः अथदर्शशांतिः अथातोदर्शजातानां मातापित्रोर्दरिद्रता तद्दोषपरिहाराय शांतिं वक्ष्यामि नारद तत्र संकल्पं विधाय तन्मध्ये कल
शं संस्थाप्य तन्मध्ये निक्षिपेद्द्रव्यं दधिक्षीरघृतादिकम् न्यग्रोधोदुंबरोश्वत्थः सचूतो निंबकास्तथा एतेषां वृक्षमूलानां त्वगादीन्पल्लवांस्तथा पंचरत्नानि निक्षिप्य च
वस्त्रयुग्मेन वेष्टयेत् तत्र सर्वे समुद्राद्इति आपोहिष्ठा त्रचेनेति कयानश्चित्र[illegible]चा यत्किंचेदमृचा चैव समुद्रज्येष्ठ इत्यृचा अभिमंत्र्योदकुंभं समंग्नेः पूर्वे
निधापयेत् दर्शस्य देवतायाश्च सोमसूर्यस्वरूपकाः प्रतिमाः स्वर्णजा नित्यं[illegible]तीताः कजा तथा आप्यायस्वेति मंत्रेण सविता पश्चात्तमेव च उपचारैः
समाराध्य ततो होमं समाचरेत् समिधश्च चरुद्रव्यं क्रमेण जुहुयाद्धरी[illegible]वित् मंत्रेण सोमो धेनुं च मंत्रतः अष्टोत्तरशतं वापि अष्टाविंशतिसं
ख्यया अभिषेकादि पूर्ववत् हिरण्यं रजतं चैव कृष्णां धेनुं च दक्षिणा ब्राह्मणान्भोजयेत्तत्र कारयेत्स्वस्तिवाचनम् इति दर्शशांतिः कृष्णपक्षे चतुर्द
श्याः प्रसूतेः षड्विधैः फलम् चतुर्दशीं च षड्भागां कुर्यादादौ शुभं स्मृतम् द्वितीये पितरं हंति तृतीये मातरं तथा चतुर्थे मातुलं हंति पंचमे वंशनाशनम् षष्ठे तु
धनहानिः स्यादात्मनो वंशनाशनम् तस्मात्सर्वप्रयत्नेन शांतिं कुर्याद्विधानतः प्रतिमां कारयेच्छंभोः कर्षमात्रसुवर्णतः तदर्धार्धेन वा कुर्यात्सर्वलक्षण
संयुतां वृषभं च समासीनं वरदाभयपाणिकम् शुद्धस्फटिकसंकाशं श्वेतमाल्यांबरान्वितम् त्र्यंबकेन मंत्रेण पूजां कुर्याद्विधानतः तत्र मूलशांतिवत्
कलशस्थापनादि कृत्वा तत्र शंभुपूजां विधाय तत्र आवाह्य वारुणैर्मंत्रैः अनेन च विधानतः इमं मे वरुणेत्यनया तत्त्वा यामीत्यृचा तथा त्वं नो अग्न इत्य
नया स त्वं न इति मंत्रतः आग्नेयकुंभमारभ्य पूजां कुर्याद्यथाक्रमात् आनो भद्राश्च सूक्तेन भद्रा अग्नेश्च सूक्तं वा कं जप्त्वा पुरुषसूक्तं च रुद्रं चैकमाज
पेत् ईश्वरस्याभिषेकं च ग्रहपूजां च कारयेत् समिदाज्यचरूंश्चैव तिलमाषांश्च सर्षपान् अश्वत्थप्लक्षपालाशसमिद्भिः खादिरैः शमीः अष्टोत्तरसहस्रं
अष्टोत्तरशतं तु वा अष्टाविंशतिभिर्वापि होमं कुर्यात्पृथक् पृथक् त्र्यंबकेनैव मंत्रेण तिलान्व्याहृतिभिः क्रमात् ग्रहाणां च होतव्याश्चास्मदुक्तविधानतः इ
त्यत्सर्वमाज्यावलोकनादि पूर्ववत् इति कृष्णचतुर्दशीजननशांतिः एक[illegible]नक्षत्रे भ्रात्रोर्वा पितृपुत्रयोः प्रसूतिश्चेत्तयोर्मृत्युर्भवेदेकस्य निश्चया
त् तत्र शांतिं प्रवक्ष्यामि सर्वाचार्यमतेन तु अग्नेरीशानभागे तु नक्षत्रप्रतिमा ततः तन्नक्षत्रोक्तमंत्रेण चार्चयेत्कलशोपरि रक्तवस्त्रेण संछाद्य वस्त्रयुग्मे

नवेष्टयेत् स्वस्वशास्त्रोक्तमार्गेण कुर्यादग्निमुखं ततः अनेनैव तु मंत्रेण हुनेदष्टोत्तरं शतम् प्रत्येकं समिदन्नाज्यैः प्रायश्चित्तं तमेव हि अभिषेकं ततः
कुर्यादाचार्यः पितृपुत्रयोः वस्त्रालंकारगोदानैराचार्यं पूजयेत्ततः ऋत्विग्भ्यो दक्षिणां दद्यान्माषत्रयसुवर्णकम् देवताप्रतिमादानं धान्यवस्त्रादिभिः सह
यानशय्यासनादींश्च दद्यात्तद्दोषशांतये भोजयेद्ब्राह्मणान्सर्वान्वित्तशाठ्यविवर्जितः इत्येकनक्षत्रशांतिः अत्रैकस्मिन्नेव नक्षत्रे भ्रात्रोर्वा पितृपुत्रयोः सू
त्रभ्राता च भ्राता च भ्रातरा विति भ्रातृपुत्रौ स्वसृदुहितृभ्यामिति एकशेषे सोदरयोर्भ्रातृभगिन्योरेव निषेधः स्यान्न तु पुंभ्रात्रोः एवं पितृपुत्रयोरित्यत्रापि
पिता च पुत्रश्चेति द्वंद्वे पितापुत्रयोरेकनक्षत्रजनननिषेधः स्यान्न तु मातृपुत्रयोः न च माता च पिता च पितरौ माता पित्रेत्येकशेषे तथा पुत्रश्च दुहिता च पुत्रौ पित
रौ च पुत्रौ चेति द्वंद्वे पितृपुत्राणामिति बहुवचनं स्यात् तथापि वचनानुरोधात् इत्थं विषयोपि संगृहीतो भविष्यति यदाह वसिष्ठः पित्रोस्तु जन्मनक्षत्रे जातस्तु पि
तृमातृहा। जन्मर्क्षे चैव तल्लग्ने जातः सद्यो मृतिप्रदः दैवकीर्तिः यद्येकस्मिन्धिष्ण्ये जायन्ते दुहितरोऽथवा पुत्राः पित्रोरंतकराः स्युर्यद्यपरे प्रीतिरतुला स्यात् अपरे
अन्यनक्षत्रे गर्गः यस्यैव जन्मनक्षत्रे जायेद्भ्राता सुतोऽपि वा सजातीयः सजात्या वा सोऽस्य प्राणान्प्रसाधयेदिति अथ मूले उपलक्षणत्वेन स वशातिशे
षभूतो गोमुखप्रसवोऽभिधीयते गर्गः प्रणिपत्य रविं ह्येष प्रायश्चित्तमनुस्मरन् सर्वारिष्टविनाशाय यदुक्तं ज्योतिषार्णवे पित्रारिष्टकृतारिष्टमा
त्रारिष्टतश्चैव [illegible] पित्रोर्गुरोः सार्पमाघचित्रेंद्रमूलभे एषुक्षेषु जातस्य कुर्याद्धि जननं तथा जन्मर्क्षे वा त्रिजन्मर्क्षे शुभवारे शुभे दिने कृत्वाभ्यं
गादिकं सर्वगृहालंकारपूर्वकम् गोमयेनोपलिप्याथ यथावित्तानुसारतः नवशूर्पं तु तन्मध्ये रक्तवस्त्रं प्रसारयेत् स्थापयित्वा शिशुं तत्र पुनः सूत्रेण वेष्ट
येत् प्राङ्मुखस्त्वमवाक्पादः तिलगर्भगतं शिशुम् गोमुखं दर्शयित्वा तु प्रजातं तु गोमुखात् विष्णुर्योनीति सूक्तेन गव्येन स्नापयेच्छिशुम् गवामंगे
षु मंत्रेण गवामंगेषु संस्पृशेत् विष्णोः श्रेष्ठेन मंत्रेण गोप्रसूतं तु बालकम् आचार्यस्तु समादाय पश्चान्मात्रे ददात्ततः माता जघन्यभागस्था शिशुमानीय तं
मुखात् ततः पित्रे तदा दद्यात्तं मात्रे प्रदापयेत् वस्त्रे संस्थाप्य तु पिता पुत्रस्य मुखमीक्षयेत् गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् आपो हिष्ठादि
भिर्मंत्रैरभिषिंचेत्ततः शिशुम् मूर्ध्नि चाघ्राय तं पुत्रं तन्मंत्रेण तदा पिता अंगादंगात्संभवसि हृदयादधिजायसे आत्मा वै पुत्रनामासि स जीव शरदः शतम्॥

मु॰टी॰ मूर्द्ध्नि त्रिरवघ्रायतं शिशुं स्थापयेत्ततः पुण्याहं वाचयेत्सम्यग्ब्राह्मणैर्वेदपारगैः हरिद्रायाथ विप्राय तां गां चाभ्यर्च्य दापयेत् गोवस्त्रस्वर्णधान्यादि दद्यादर्की
म॰प्र॰ दिवः क्रमात् यथाशक्ति धनं दद्यात्ब्राह्मणेभ्यस्तथा पिता ततो होमं प्रकुर्वीत स्वगृह्योक्तमार्गतः उल्लेखनादिकं कृत्वा चाज्यभागांतमाचरेत् होमस्येशान
३३. दिग्भागे धान्योपरि शुभं घटम् सपंचगव्यं संस्थाप्य तिलान्तत्र विनिक्षिपेत् क्षीरिद्रुमकषायांश्च पंचरत्नानि निक्षिपेत् वस्त्रयुग्मेण संछाद्य सीरादिभिरथार्च
येत् विष्णुं वरुणमभ्यर्च्य प्रतिमां च विधानतः आपोहिष्ठेति तिसृभिः क्रमे सो[illegible]स्त्वथ तद्विष्णोः परमं पदमसीभ्यामिति सूक्ततः ऋग्भिराभिः प्रत्येकं च अ
शार्विंशतिसंख्यया अशक्तौ चाष्टसंख्यं वा दधिमध्वाज्यसंयुतम् आदित्यादिग्रहाणां च होमं कुर्यात्समंत्रकम् इति गोमुखप्रसवविधिः अथ प्रसंगात्त्री
तरशांतिः कृतत्रये कृता चेत्स्यात्त्रये वा कृतो यदि मातापित्रोः कुलस्यापि तदारिष्टं महद्भवेत् जातस्यैकादशे वापि द्वादशाहे शुभे दिने आचार्यं कृत्वि
जां वृत्वा ग्रहयज्ञपुरःसरम् ब्रह्मविष्णुमहेशेंद्रप्रतिमास्वर्णतः कृताः पूजयेद्धान्यराशिस्थकलशोपरि शक्तितः पंचमे कलशे रुद्रं पूजयेद्रुद्रसंख्यया
रुद्रसूक्तानि चत्वारिंशांति सूक्तानि सर्वशः द्विज एको जपेद्धोमकालेऽपि च समाहितः आचार्यो जुहुयादत्र समिदाज्यतिलांश्चरून् अष्टोत्तरसहस्रं वा
शतं वा विंशतिं तु वा देवताभ्यश्चतुर्थ्यंकादिभ्यो ग्रहपुरःसरम् कांस्याज्यवीक्षणं कृत्वा शेषं पूर्ववदाचरेत् इति त्रीतरशांतिः अथ सूर्यचंद्रग्रहणसमये जन
नशांतिः ग्रहणे चंद्रसूर्यस्य प्रसूतिर्यदि जायते व्याधिपीडा तदा स्त्रीणामादौ तु ऋतुदर्शनात् शांतिस्तेषां प्रवक्ष्यामि नराणां हितकाम्यया यस्मिन्नृक्षे विशेषेण
ग्रहणं संप्रजायते तदृक्षाधिपतेः रूपं स्वर्णेन प्रकल्पयेत् यथाशक्त्यनुसारेण वित्तशाठ्यं न कारयेत् सूर्यग्रहे सूर्यरूपं स्वर्णेन स्वशक्तितः चांद्रं चंद्रग्रहे पी
मानं रजतेन विशेषतः राहुरूपं प्रकुर्वीत नागेनैव विचक्षणः नागेन सीसकेन शुचौ देशे प्रयत्नेन गोमयेन प्रलेपयेत् तस्योपरि न्यसेद्धीमान् अनंवस्त्रं
शोभनम् त्रयाणां चैव रूपाणां स्थापनं तत्र कारयेत् रक्ताक्षतं रक्तगंधं रक्तपुष्पांबराणि च सूर्यग्रहे प्रदातव्यं सूर्यप्रीतिकरं च यत् श्वेतवस्त्रं श्वेतमाल्यं श्वेतगं
धाक्षतादिभिः चंद्रस्य प्रदातव्यं चंद्रप्रीतिकरं च यत् राहवे चैव दातव्यं कृष्णपुष्पांबराणि च दद्यान्नक्षत्रनाथाय श्वेतगंधानुलेपनम् सूर्यं संपूजयेद्धीमान्
नाकृष्णेनेति मंत्रतः चंद्रग्रहे च पालाशैः समिद्भिर्जुहुयान्नरः दूर्वाभिर्जुहुयाद्धीमान् राहोः संप्रीणनाय च सर्ववाः समिद्भिर्[illegible] भेषाय जुहुयाद्बुधः

भेश्रयनक्षत्राधिपतये आज्येन चरुणा चैव तिलैश्च जुहुयात्ततः पंचगव्यैः पंचरत्नैः पंचत्वक् पंचपल्लवैः जलैरोषधिकल्कैश्च सहितैः कलशोद्
कैः औषधिकल्कैः सर्वौषधिकल्कैः अभिषेकं प्रकुर्वीत यजमानेप्रयत्नतः मंत्रैर्वारुणदैवत्यैरापोहिष्ठादिभिः सह इमंमेगंगे पितरस्तत्वायामीति मं
त्रकैः अभिषेके निवृत्ते तु यजमानः समाहितः अनेन विधिना शांतिं कृत्वा सम्यग्विशेषतः आकालमृत्युशोकं च व्याधिपीडां न वाप्नुयात् सौख्यं सौम
नस्यं नित्यं सौभाग्यं लभते नरः इत्थं ग्रहणजातानां सर्वारिष्टविनाशनम् कथितं भार्गवे नेदं शौनकाय महात्मने इति शौनकोक्त ग्रहणजननशांतिः
अथ ज्वराद्युत्पत्तिकालीन नक्षत्रशांतिः तत्र साधारणो विधिः यस्मिन्नक्षत्रे ज्वरादिपीडा भवति तन्नक्षत्राधिदेवताप्रतिमां स्ववर्णेन कारयित्वा अ
मुकनक्षत्रसंभूतव्याधिशान्त्यर्थं नक्षत्रशांतिं करिष्ये इति संकल्प्य शुचिप्रदेशे गोमयेनोपलिप्ते तंडुलैश्चतुरस्रं मंडलं निर्माय तन्मध्ये तत्तद्वर्णवर्ण
वस्त्रद्वयवेष्टितं ग्रंथिं वस्त्रादि चर्चितं कलशं धान्यस्योपरि विन्यस्य तत्र सर्वौषधीः पंचरत्नानि पंचगव्यानि सप्तमृत्तिकाः पंचपल्लवान् वरुणमंत्रेण
कलशे निक्षिप्य सर्वे समुद्रा इति तत्तीर्थान्यावाह्य तत्वायामीति वरुणमावाह्य संपूज्य स्वस्वगृह्योक्तविधिना अग्निं प्रतिष्ठाप्य आज्यभागान्ते तन्नक्षत्रा
धिदेवतामंत्रेण तन्नक्षत्र पूर्वोक्त नक्षत्रदेवतामंत्रेण तत्तद्द्रव्येण च होमं कृत्वा तेन वरुणविकलशेन यजमानाभिषेके विहिते ततः प्रतिमां गां ब्राह्म
णाय दद्यात् असौ साधारणो विधिः उक्तं च यस्मिन्नृक्षे भवेत्पीडा तन्नक्षत्रस्य देवता सुवर्णनिर्मितं कृत्वा पूजयेत्प्रयतः शुचिः गोमयेनानुलिप्ते स्यमं
डले शुभलक्षणम् चतुरस्रं च संकीर्णं तंडुलैश्च कृताकृतैः कृत्वा तु स्थंडिलं तत्र यत्नतः कुंभयाम्रदा तत्पार्श्वे च सुधीः कुर्यात्तंडुलानां महाव्ययम्
तत्र प्रमाणं खारी वा द्रोणा वा दृशा तत्यपेक्षया अभावे पंच वा द्रोणा द्रोणं वा तदभावतः ईशानकोणदेशे तु कलशं स्थापयेत्सुधीः निधाय द्रविणं तत्र
कलशे शक्त्यपेक्षया पीठं तु पूर्वतः स्थाप्य नव्यवस्त्रेण संयुतम् स्वस्तिकं तंडुलानां च शुभानां तत्र सं लिखेत् तन्मध्ये देवतास्तिस्रो नक्षत्रचितयस्त्वे
यस्मिन्नृक्षे भवेद्रोगस्तत्पूर्वापरे सुधीः उडुनी पूजयेद्यत्नाद्धिप्रत्यधिदैवते दैवतायस्य नक्षत्रस्य मंत्रस्तल्लिंग एव च इत्थं च तस्य यत्प्रोक्तं प्रभावं प्रकृतं
तथा तत्सर्वं विदुषा नीय होमं तत्र प्रकल्पयेत् पंचोपचार संयुक्तां पूजां तत्र प्रकल्पयेत् स्वगृह्योक्तविधानेन कुर्यादग्निमुखं सुधीः कलशं जलपूर्णं च

वस्त्रयुग्मेन वेष्टितम् निधाय चौषधीस्तत्र पंचपल्लवसंयुताः सप्तस्थानमृदं कुंभौ आक्तवालंघ्र कल्पयेत् इमंमेवरुणइत्येवं जलमंत्रेण वा पुनः सर्वेसमुद्राः
सरितइतिमंत्रं च संस्मरेत् यच्चिद्धितेविशोयथेत्यादि सूक्तं जपेत्पुनः आवाहयेद्दृढेदेवं वरुणं पयसांपतिम् एवं नक्षत्रशांत्यर्थं विदध्यात्पूर्वपीठिकाम् सामा
न्योयंविधिः प्रोक्तो नक्षत्राणां प्रपूजने सर्वौषधीनांदुःप्राप्तौ भवेदेकाशतावरी सर्वेषामपिगंधानामभावे चंदनं मतम् शतपत्रं सुमनसां धूपाभावे च गुग्गुलुः नै
वेद्यानामभावे तु पायसं सघृतं स्मृतम् मंत्राणामप्यभावे तु गायत्रीमंत्रउत्तमः होमद्रव्यस्य दुःप्राप्तौ तिलाः प्रोक्ता मनीषिभिः अष्टोत्तरसहस्रं च तथा शत
मुदाहृतमिति अथ नक्षत्रदेवताध्यानानि देवतं अश्विनौ तत्र द्विभुजौ शुक्लवर्णकौ सुधाकलशसंयुक्तौ कमंडलुधरौ शुभौ १ यमस्तु देवता तत्र कृष्णवर्णो
द्विबाहुकः तुलापवाहनः श्रीमान्पाशदंडधरः प्रभुः २ अग्निस्तु देवता तत्र रक्तवर्णोऽजवाहनः चतुर्भुजो धृतामंत्रस्तुवस्त्रुक्वरदाभयः ३ रक्तवर्णश्चतुर्बाहु
र्हंसारूढश्चतुर्मुखः पद्मासक्ष्मवरदाभयहस्तो निरामयः ४ सोमोहि देवता तस्य श्वेतवर्णः शुभाकृतिः दशाश्वरथमारूढः श्वेताश्वोपिनिगद्यते ५ रुद्रोहि
देवता यस्य वृषारूढश्चतुर्भुजः त्रिशूलखड्गावरदाभयहस्तश्च कीर्तितः ६ चतुर्भुजादितिः पीतसाक्षसूत्रकमंडलुः वरदाभयहस्ता सा कार्या स्वर्णमयी शुभा ७ च
तुर्भुजाः पीतवर्णो देवता स्याद्बृहस्पतिः दंडाक्षसूत्रपाणिस्तु साभयः सकमंडलुः ८ सर्पस्तु देवता तत्र महामूषलिरूपधृक् फणविस्तृताशिरश्चंडोमकपिंगललोचनः
९ पितरो देवता तत्र कृष्णवर्णश्चतुर्भुजः भद्राक्षसूत्राभयदकमंडलुधराः शुभाः १० पूर्वाफाल्गुनिकायां च भगो देवः प्रकीर्तितः रक्तवर्णो बृहासीनो द्विभुजो भयप
द्मकः ११ अर्यमा देवता पद्ममध्यस्थः पद्मवर्णकः पद्माभयकरः श्रीमान्स्वर्णमूर्तिर्महाद्युतिः १२ सविता देवता तस्य सप्ताश्वरथवाहनः द्विभुजो रक्तवर्णः स्यात्
पद्मासनसमाश्रयः १३ त्वष्टा पद्मस्थितिश्चित्रवर्णः स्यात्स चतुर्भुजः पद्माक्षसूत्राक्षवलयः पद्मालःपद्मकरः प्रभुः १४ वायुश्च देवता तत्र मृगारूढश्च मोचकः अ
जाचर्मधरः श्रीमान्द्विभुजः परिकीर्त्तितः १५ इंद्राग्नी देवता तत्र गजाजावाहनौ पनौ चतुर्बाहू रक्तवर्णौ निजशस्त्रधरौ तथा १६ चापांकुशाभयैर्युक्तौ तथा
समविराजितौ पद्मासनौ रक्तवर्णो मित्रस्तस्या तु देवता पद्माभयकरः श्रीमान्द्विभुजः परिकीर्त्तितः १७ शक्रो देवतारूढो दिव्यसिंहासने विभुः श्वेतवर्णो वज्रा
धरोऽभयपाणिर्महाभुजः १८ निर्ऋतिर्देवता तत्र प्रेतारूढश्च मोचकः खड्गखेटकधारी च द्विभुजः परिकीर्त्तितः १९ जलं तु देवता तस्य शुक्लवर्णा शुभाकृतिः ॥

वरुणोस्य जलस्यापि स्वामी पूज्यतमो मतः मकरो वाहने विष्णो भवेत्सम्यक् करो ध्रुवम् २० विश्वेदेवा देवता श्च श्वेतवर्णाश्चतुर्भुजाः वरदाभयहस्ताश्च
साक्षसूत्राम्बुभाजनाः २१ विष्णुस्तु कृष्णवर्णः स्यात्सन्नगाश्च नवाहनः शंखचक्रगदापाणिः पीतवासाश्चतुर्भुजः २२ वसवो देवतास्तत्र श्वेतवर्णाश्च
तुर्भुजाः वरदाभयहस्ताश्च साक्षसूत्राम्बुजासनाः २३ वरुणो देवता तत्र मकरोपरि संस्थितः यष्टिपाशधरः श्रीमान् गदापद्मधरः स्तथा २४ ॥
अनेकचरणो रुद्रो देवतास्य प्रकीर्तिता खड्गचर्मधरो वाग्मी भुजद्वयसमावृतः २५ अहिर्बुध्न्याभिधो रुद्रो देवतास्य प्रकीर्तिता श्वेतश्चतुष्क
रः पद्मवरदाभयपाशभृत् २६ पूषा तु देवता तत्र पद्मवर्णोम्बुजासनः द्विभुजः पद्मपाणिः स्यात्पद्मगर्भप्रियो विभुः २७ इति नक्षत्रदेवताध्यानं
अथोपयुक्तत्वान्नारदीयोक्ता काकमैथुनदर्शनशांतिः दिवा वा यदि वा रात्रौ यः पश्येत्काकमैथुनम् स नरो मृत्युमाप्नोति त्यथवा स्थाननाशनम्
काकघातव्रतं यद्वा विदधीत तापवत्सरम् पितॄन्देवान्द्विजान्भक्त्या प्रत्यहं वाभिवादयेत् जितेन्द्रियो जितक्रोधः सत्यधर्मपरायणः तद्दोषशमना
र्थाय शांतिकर्म समारभेत गृहस्येशानदिग्भागे होमस्थानं प्रकल्पयेत् गृह्योक्तविधिना तत्र प्रतिष्ठाप्य हुताशनम् प्रतिमंत्रं त्र्यम्बकेन अथ मृत्युंजयेन
च व्याहृतीभिर्व्रीहितिलैः जपाद्युतं प्रकल्पयेत् पूर्णाहुतिं च जुहुयात्ततोऽभ्य चिरलंकृतः स्वर्णशृंगीं रौप्यखुरां कृष्णां धेनुं पयस्विनीम् वस्त्रालंकारसं
युक्तां निष्कद्वादशसंयुताम् तदर्धेन तदर्धेन दद्याद्दक्षिणयायुताम् यथावित्तानुसारेण न्यूनाधिकत्वकल्पना आचार्याय श्रोत्रियाय तां गां दद्यात्कुटुं
बिने यस्मात्त्वं पृथिवी सर्वा धेनो केशवसन्निभे सर्वपापहरा नित्यमतः शांतिं प्रयच्छ मे ब्राह्मणेभ्यो विशिष्टेभ्यो यथाशक्त्या च दक्षिणाम् ब्राह्मणान्भोज
येत्सम्यक् स्वस्तिवाचनपूर्वकम् एवं यः कुरुते सम्यक् स नरो दोषात्प्रमुच्यते इति काकमैथुनदर्शनशांतिः तत्रैव कपोतादिशांतिः आरोहयेद्गृहं यस्य कपो
तो वा प्रवेशयेत् स्थानं गृहानिर्वित्तस्य यद्वानर्थपरंपरा दोषाय धनिनां गेहे दरिद्राणां शिवाय च तस्य शांतिश्च कर्तव्या जपहोमविधानतः ब्राह्मणान्वरयि
त्वा स्वस्तिवाचनपूर्वकम् षोडशद्वादशाष्टौ वा श्रौतस्मार्तक्रियापरान् देवाः कपोत इत्यादि ऋग्भिः पंचभिर्जपम् दशकृत्वा प्रपठेन स्वगृह्योक्त वि
धानतः ईशान्यां स्थापयेद्वह्निमुखांतेऽष्टोत्तरं शतम् प्रत्येकं समिदाज्यान्नैः प्रतिप्रणवपूर्वकम् यत इंद्र भयामहे स्वस्तिदेति त्र्यंबकेः त्रिभिर्मंत्रैश्च जुहु

आश्लेषायाश्चक्राकारम् मघायाभवनंगृहसदृशम् पूर्वाफल्गुन्याः मंचःखट्वाकारम् उत्तराफाल्गुन्योः शय्याकारम् हस्तस्यहस्ताकारम्।
चित्रायामौक्तिकाकारंस्वात्याविद्रुमंप्रवालसदृशम् ५९ तोरणंवलिनिभमिति विशाखायास्तोरणाकारम् अनुराधायाबलिर्भक्तःपुंजाकारं
ज्येष्ठायाः कुंडलाकृतिः मूलस्यसिंहपुच्छाकारः पूर्वाषाढायागजदंतसदृशम् उत्तराषाढायामंचकसदृशम् अभिजितस्त्रिकोणकारः श्रव
णस्यत्रिचरणसदृशम् धनिष्ठायामर्दलसदृशम् शततारायाश्चवर्तुलं पूर्वाभाद्रपदायामंचकसदृशम् उत्तराभाद्रपदायायमलाभम् रेवत्या
मर्दलमृदंगाकारस्वरूपमित्यर्थः ६० अथजलाशयारामदेवप्रतिष्ठामुहूर्त्तंसामान्यतोलग्नशुद्धिर्दैवताविशेषेणलग्नशुद्धिस्तत्रविशेषं

एषूक्तचक्रेभवनंचमंचःशय्याकरौमौक्तिकविद्रुमंच ५९ तोरणंवलिनिभं
चकुंडलंसिंहपुच्छगजदंतमंचकाः त्र्यस्त्रिचत्रिचरणाभमर्दलौवृत्तमंचकय
माभमर्दलाः ६० जलाशयाराममसुरप्रतिष्ठासौम्यायनेजीवशशांकशुक्रे दृश्ये
मृदुक्षिप्रचरध्रुवेस्यात्पक्षेसितेस्वर्क्षतिथिक्षणेवा ६१ रिक्तारवर्जेदिवसेतिशस्ता
शशांकपापैस्त्रिभवांगसंस्थैः॥ ॥

चोपजातिकयाश्लेष्याहजलाशयेति रिक्तारेति शिवोमयुग्मेतिच ज
लाशयाः वापीकूपतडागादयः तेषांप्रतिष्ठाउत्सर्गः आरामउपवनम् तस्याप्युत्सर्गः सुरादेवाविष्ण्वादयः तेषांप्रतिष्ठापनम् सौम्यायनेउत्तरायणे तथाजी
वशशांकशुक्रेदृश्येउदितेसति तथामृदुध्रुवक्षिप्रचरनक्षत्रेषु तथासितेशुक्लपक्षेतथास्वर्क्षतिथिक्षणेवा ६१ तथारिक्तारवर्जेदिवसे रिक्तातिथिभौ
मवारव्यतिरिक्ततिथिवारेषुएवंविधेदिनेप्रतिष्ठाजलाशयारामदेवानांक्रमेणकर्माहेतोपभोग्यत्वपूजायोग्यत्वरूपाअतिशस्तास्यात् तथाचगार्ग्यःदेववा
रामवाप्यादिप्रतिष्ठामुत्तरायणे माघादिपंचमासेषुकुर्यात्पंचमीदिनम् दक्षिणेत्वयनेकुर्वन्नतत्फलमवाप्नुयात् पराशरदक्षिणायनएवजलस्थितिसंभवः

श्रीगणेशायनमः अथसंक्रांतिप्रकरणंव्याख्यायते तत्रप्राग्राशितोपरराशौसंक्रमणंनामगमनंसंक्रांतिस्तस्याः नक्षत्रविशेषवशेनवारवशेनचसंज्ञांफलंच
सार्धवसंततिलकेनाह घोरार्केति विप्रांश्चेति अर्कसंक्रमणमर्कसंक्रांतिः उग्ररवौ उग्रनक्षत्रेषुरविवारेचेत्यतदा घोरेतिसंज्ञा साशूद्रान्क्षपयेत्क्षपयतु
सा क्षयेत उग्ररवावितिउग्रैःसहितोरविःउग्ररविः तस्मिन्नुग्ररवावितिमध्यमपदलोपितत्पुरुषः ततःसप्तम्येकवचनम् अथवासमाहारद्वंद्वे अनित्यमा
गमशासनमितिनुमभावः एवंलघुविधावित्यादिष्वपिसमाधेयम् अथलघुनक्षत्रेषुविधौसोमवारेसूर्यसंक्रांतिर्ध्वांक्षीनाम्नीविशोवैश्यान्क्षपयेत् च
रर्क्षभौमेचरनक्षत्रेभौमवारेवाऽर्कसंक्रमणंमहोदरसुतामहोदरीसंज्ञकाचौरान्क्षपयेत् ज्ञमैत्रेबुधवारेमैत्रसंज्ञनक्षत्रेषुवाऽर्कसंक्रांतिर्मंदाकिनी
नाम्नीनृपतीन्राज्ञःक्षपयेत् स्थिरगुरौस्थिरनक्षत्रेषुगुरुवारेवार्कसंक्रांतिर्मंदानाम्नीविप्रान्ब्राह्मणान्क्षपयेत् मिश्रभृगौमिश्रनक्षत्रयोःभृगुवारे

घोरार्कसंक्रमणमुग्ररवौहिशूद्रान्ध्वांक्षीविशोलघुविधौचचरर्क्षभौमे चौरान्महोदरसुतानृपतीञ्ज्ञमैत्रेमंदाकिनीस्थिरगुरौक्ष
पयेच्चमन्दा १ विप्रांश्चमिश्रभभृगौतुपशूंश्चमिश्रातीक्ष्णार्कजेंत्यजक्षयकृत्खलुराक्षसीच त्र्यंशेदिनस्यनृपतीन्प्रथमेनि
हंतिमध्येद्विजानपिविशोपरकेचशूद्रान् २ अस्तेनिशाप्रहरकेषुपिशाचकादीन्नक्तंचरानपितदानृपशुपालकांश्च ॥ ६

वाऽर्कसंक्रांतिर्मिश्रानाम्नीपशून्क्षपयेत् तीक्ष्णार्कजेतीक्ष्णसंज्ञकनक्षत्रेषुअर्कजेशनिवारेवाराक्षसीनाम्नी अंत्यजक्षयकृत् अंत्यजान्चांडालान्क्ष
पयतीति अंत्यजक्षयकृत्स्यात् १ अथदिनरात्रिविभागेनसंक्रांत्यशुभफलंउत्तरायणदक्षिणायनसंज्ञांचसार्धवसंततिलकयाह त्र्यंशइति अस्तेइति
अत्रार्कसंक्रमणमित्यनुवर्तते दिनमानेत्रिभिर्भक्तेत्र्यंशोभवति तत्रदिनस्यप्रथमेत्र्यंशेऽर्कसंक्रमणंनृपतीन्हन्ति मध्येद्वितीयत्र्यंशेद्विजान्ब्रा
ह्मणान्हंति अपरकेतृतीयेत्र्यंशेवैश्यान्हंतीत्येवंसर्वत्रव्याख्येयम् अस्तेसूर्यास्तसमयेऽर्कसंक्रमणंशूद्रान्हंति २ अथरात्रिसंक्रांतिफलम् रात्रिप्र
थमप्रहरेपिशाचकान् आदिशब्देनभूतान् द्वितीयप्रहरेनक्तंचरान्राक्षसान् तृतीयप्रहरेनटान्नर्तकान् चतुर्थप्रहरेपशुपालकान् अभीत्सन् सूर्यो
दयसमकालेऽर्कसंक्रमणंसकललिंगिजनपाखंड्यादिकंहंतीत्यर्थः पाखंडाःसर्वलिंगिजनइत्यभिधानात् क्रूरसौम्यवारपरत्वेनफलमाह वसिष्ठः ॥ ६

रविरविजसोमवारेसंक्रांतौदिनकरस्यतन्मासेपित्तकफानिलजामयनरपतिकलहस्त्ववृष्टिश्च बुधगुरुसितचंद्राहेसतिसंक्रांतावनामयत्वणां क्षिति
पतिनिकरक्षेमंसस्यविवृद्धिर्विधर्मिणांपीडाम् जन्मनक्षत्रेसंक्रांतिफलंदीपिकायां यस्यजन्मर्क्षमासाद्यरविसंक्रमणंभवेत् तन्मासाभ्यंतरेतस्यरोगक्ले
शधनक्षयाः नगरसरोरुहपत्रैरजनीसिद्धार्थलोधसंयुक्तैः स्नानंजन्मनक्षत्रेरविसंक्रांतौनृणांशुभदम् अन्यच्चवसिष्ठः अजकन्याझषककिंणिसंक्रां
तौयदिनचेद्वर्षं आमयमरणंभूभृतयुद्धमनर्घ्यत्ववृष्टिश्च वृषवृश्चिकतुलामकरेवृष्टिःस्यात्संक्रमविषये विस्फोटामयतस्करपीडावृष्टिःकृशानुभयं अ
थसौम्ययाम्यायनमिति मकरकर्कटयोःसंक्रांतिश्चेत्तदाक्रमेणसौम्यायाम्यायनंनिरुक्तम् मकरेउत्तरायणंकर्केयाम्यायनंस्यात् ३ अथावशिष्टसंक्रांति
षुषडशीत्यादिसंज्ञानुष्टुभाह षडशीत्याननमिति धनुर्मिथुनकन्यामीनेषु अर्कसंक्रमणंषडशीत्याननंषडशीतिमुखसंज्ञंस्यात् तुलामेषयोः संक्रांति

**सूर्योदयेसकललिंगिजनंचसौम्ययाम्यायनंमकरकर्कटयोर्निरुक्तम् ३ षडशीत्याननंचापनृयुक्कन्याझषेभवेत् तुलाजौ**
**विषुवंविष्णुपदंसिंहालिगोघटे ५ संक्रांतिकालादुभयत्रनाडिकाःपुण्यामताःषोडशषोडशोष्णगोः ॥ छ ॥ श्रीः ॥**

र्विषुवसंज्ञा वृषसिंहवृश्चिककुंभेष्वर्कसंक्रांतिर्विष्णुपदसंज्ञकाः ४ संक्रांतौगौणमुख्यकालमुपजात्याह संक्रांतिकालादिति गणितमार्गेणय
उष्णगोः सूर्यस्यसंक्रांतिकालआगतः ततउभयत्रऽपूर्वतः परतश्चषोडशषोडशनाड्यो घटिकाः पुण्यसंपादकत्वात्पुण्यामताः ब्रह्मसिद्धांतेसंक्रांतेः
प्राक्परस्ताच्चसार्द्धाःषोडशनाडिकाः त्रयस्त्रिंशत्संक्रमस्यपुण्याःसर्वस्यनाडिकाः अनेनसंक्रांतेःपुण्यकालस्तुषोडशोभयतः कलाइतिस्मृतिवाक्येपूर्वतः
परतश्चाष्टौअष्टौघटिकाइत्येवंषोडशेतिव्याख्यातंतदपाकृतंभवति सूर्यसिद्धान्तेपिअर्कमानकलाःषष्ट्यागुणिताभुक्तिभाजिताः तदर्धनाड्यःसंक्रांतेरर्वा
क्पुण्यंतथापरेइति अथनिशीथतइति निशीथतोऽर्धरात्रात् अर्वाक् पूर्वपरत्रपश्चाच्चसंक्रांतिकालेसति पूर्वापराहंतिमपूर्वभागयोः पूर्वापरयोरह्नोःक्रमेणां
तिमपूर्वभागयोरुभयत्रषोडशषोडशघटिकाःपुण्याइतिपूर्वेणसंबंधःअयमर्थः॥ ॥ ॥ ॥ श्रीरामचंद्रार्पणमस्तु॥

तथैवार्द्धोदयास्तात घटिकात्रयसंमितेति एवंसत्यर्कबिंबस्याधस्तादर्धोदयादूर्ध्वं क्रमात् घटिकात्रयं स्मृताः त्रिघटिमिता अस्तसंध्योदयसंध्यवोच्यते तत्रास्तसंध्यायां यदि मकरसंक्रमः स्यात्तदा दिनएवपुण्यकालोनोत्तरदिने यद्युत्तसंध्यामतिक्रम्यमकरसंक्रांतिस्तदोत्तरदिनएवपुण्यकालोनपूर्वदिने एवंयद्युदयसन्ध्यायांकर्कसंक्रांतिस्तदासूर्योदयानंतरमेवपुण्यकालोनप्राग्दिने यद्युदयसंध्यातः प्राक्कर्कसंक्रमस्तदापूर्वदिनएवपुण्यकालेनोत्तरदिनेइति निष्कर्षोऽर्थः अथ रात्रौस्नानंनकुर्वीतदानंचैवविशेषतइति रात्रौस्नानदानादिनिषेधेपि नैमित्तिकंतुकुर्वीतस्नानंदानंचरात्रिष्वितिस्मृतंतुवाक्यशेषात् सुतजननेसंक्रांतावुपरागेसूर्यचंद्रयोर्नित्यम् रात्रावपिकर्त्तव्यंस्नानंदानं विशेषतोनृणामितिवसिष्ठवचनात राहुदर्शनसंक्रांतिविवाहात्ययवृद्धिषु स्नानदानादिकंकार्यंनिशिकाम्यव्रतेषुचेति रात्रौसंक्रमणेरात्रौस्नानंप्राप्तम् तत्कर्कमकरसंक्रांतौस्नानदानादौदेशभेदशिष्टाचारेणव्यवस्थावगंतव्या तत्रागौर्जरास्तु ग्रहणवदयनइतिस्वीयसूत्रम् स्नानंदानंग्रहणवत्सौम्ययाम्यायनद्वये

चेद्याम्यसौम्येअयनेक्रमात्तः पुण्यौतदानीपरपूर्वघस्रौ ७ याम्यायनेविष्णुपदेचाद्यामध्यास्तुलाजयोः ॥ ७ ॥

यइतिकश्यपसंहितोक्तंवातुक्रमस्यसावयनसंभवेसतिसम्यावेवस्नानादिकंकुर्वंति दक्षिणात्यास्तु कार्मुकंतुपरित्यज्यझषंयातिदिवाकरः इत्यादिभविष्योत्तरादिवाक्यमंगीकृत्यदिवसएवस्नानादिकंकुर्वन्ति तत्रापिनारदोक्तसंध्याकालसंक्रमेविशेषोध्येयइत्यलम् ७ अथपूर्वपराःषोडशघटिकाःपुण्याइति पूर्वसामान्येनोक्तमिदानींविष्णुपदादिविशेषमनुष्टुभाह याम्यायनइति कर्कसंक्रांतौविष्णुपदेवृषसिंहवृश्चिककुंभसंक्रांतिषुसंक्रांतिकालादाद्याः प्रथमाः षोडशघटिकाः अतिपुण्यदाः स्नानदानादौअनंतपुण्यदाज्ञेयाः अग्निमास्तुनतथातुलाजयोः तुलामेषयोः मध्याउभयतःषोडशघटिकाः संक्रांतिकालात्प्रागपिपरतश्चाद्याविति दीपिकाकारोव्याख्यातंयदुक्तंगुरुणा वर्त्तमानेतुलामेषेनाड्यस्तूभयतोदशेतिमध्यमतत्तीयांशाभिप्रायेणेतिज्ञेयम् तथाषडशीत्याननंमिथुनकन्याधनुर्मीनसंक्रांतिषु ॥ ७ ॥ ९ ॥ ३ ॥ श्रीः ॥

सौम्यायनेमकरसंक्रांतौचसंक्रांतिकालस्यागामिनःषोडशघटिकाअतिपुण्याः प्रथमस्तुमतथा एकविंशतिर्वेतुण्यकालस्तेषुस्नानादिकंकर्तव्यंविशेषतश्च स्नानाद्यकुर्वतप्रत्यवायमाह वसिष्ठः विषुवत्ययनेग्रहणंसंक्रांतौपुण्यदिवसेष्वपि तत्रस्नानंनकरोतिहिदरिद्रःपापंव्रजतितत्सेप्सित्वा षडशीत्यांतुयदा नविषुवहृश्येदृश्यतेसागरस्यांततस्यांतोनैवहृश्यतइतिभरद्वाजोक्तेः अयंचनिर्णयश्चन्द्रादीनामपिसंक्रमेज्ञेयः तत्रहेमाद्र्यादौकालनिर्णयकाल रिभिः याःपुण्यकालघटिकाउपनिबद्धास्ताः स्थूलाः तेनषष्टिघ्नबिंबंग्रहभुक्तिभक्तमित्यादिप्रकारेणग्रहमध्यत्रभुक्तिमध्यमविवेरानीताः सूक्ष्मा घटिकालिख्यंते स्फुटमतिस्फुटविंबैश्चैतासाध्यन्तेता अतिसूक्ष्मास्तासामतिपतत्वात् श्लोकंअनुपतिवधः मध्यमास्तुपथानाड्योरामगुणा ३३ रवे रथविधोःषट्रोः पलैर्युक्तद्वयम् ७।२६ भौमस्याब्धिपलैर्युतानव ९।४ विदोयुक्ताः पलैः रवाश्विभिः षड्नाड्यो ६।२० षगजा८८ गुरोरथभृगोर्नंदाः पलैरष्ट भिः९।८ पुण्यास्तु सनेः १६० यनेरुभयतीरस्त्रयोः संक्रमेरितिं८ निरयनांशसंक्रांतिमभिधायेदानींसायनांशसंक्रांतिसपुण्यकालमुपजात्याह तथेति यथारा

षडशीत्याननेसौम्येपरानाड्योतिपुण्यदाः ८ तथायनांशाःस्वरसाहताश्चसप्ताष्टार्कगत्याविहृतादिनाद्यैः॥ ७ ॥ ४ ॥

शिसंक्रमाबहुपुण्यदास्तथाचलसंक्रमाअपीतिव्यवहितस्तथाशब्दः अयनांशाः षष्ठ्यागुण्याः स्पष्टसूर्यगत्याविहृतालब्धैर्दिनाद्यैर्दिनंघटीपलैः कल्प्यामेषादि द्वादशसंक्रमाः स्युस्तेचलसंक्रमादानेजपादौजपश्राद्धहोमादौबहुपुण्यदाभवंति पुलस्त्यः अयनांशसंस्कृतोभानुर्गोलेचरतिसर्वदा अमुस्याराशिसंक्रांति र्यथोक्तनेतथा अयनेविंशतिः पूर्वामकरेविंशतिःपरेति अत्रमकरायणेपूर्वाविंशतिर्घटिकाःपुण्याः मकरसंक्रांतौतुपराविंशतिर्घटिकाःपुण्यकालःम कर्कटेतिरिक्तेकादशसंक्रांतिषुतत्तत्संक्रमवत् पुण्यकालोज्ञेयः अयनांशानयनादिविचारः सिद्धान्तादवगंतव्याः ईश्वरेच्छालोकादृष्टवशात्तत द्राश्यादिभागस्यसूर्यतेजः॥ ७ ॥

संपर्कं श्चलसंक्रमः मंडलसंक्रमश्च राशिसंक्रम इति विषयविवेकः तत्र निरयनगणनयैव सकलव्यवहारः साध्यः सायनगणनातु नियतविषयैव अयनांशैः परातव्यालग्नेक्रांतौ चरागमे विनिभेसत्रिभेपाते तथा दृक्कर्मपातयोरिति एवं द्वयोरपि मानयोरसंकीर्णो व्यवहार इति सर्वमनाकुलम् पुण्यकालस्तु भयविधसंक्रमेपिज्ञेयः पूर्वलिखितवाक्यस्वरसात् ९ अथ संक्रांतसंयोगाज्जघन्यबृहत्समनक्षत्राण्युपजात्याह सममिति मृदुक्षिप्रवसुश्रवोग्निमघात्रिपूर्वास्त्रपभं सम अस्वपभंमूलः एतानि पंचदश भानि समसंज्ञानि ज्ञेयानि ध्रुवद्विदैवादितिभं बृहत्स्यात् ध्रुवादिषड्भानि बृहत्संज्ञकानि सार्पांबुपार्द्रानिलशाक्रयाम्यं जघन्यं स्यात् आश्लेषादिषड्भानि जघन्यसंज्ञानि १० अथ संक्रांतयोजनमुपेंद्रवज्रयाह जघन्यभेइति जघन्यनक्षत्रेऽर्कसंक्रमणे

मेषादितः प्राक् चलसंक्रमाः स्युर्दिने जपादौ बहुपुण्यदास्ते ९ समंमृदुक्षिप्रवसुश्रवोग्निमघात्रिपूर्वास्त्रपभं बृहत्स्यात् ध्रुवद्विदैवादितिभं जघन्यंसार्पांबुपार्द्रानिलशाक्रयाम्यम् १० जघन्यभेसंक्रमणेमुहूर्त्ताः शरेंदवो १५ बाणकृता ४५ बृहत्सु खरामसंख्याःसमभेमहर्घसमर्घसाम्यं विधुदर्शनेपि ११ अर्कादिवारे संक्रांतौ कर्कस्यारविशोषकाः ॥ ० ॥ ० ॥ ० ॥ श्रीजानकीवल्लभो विजयते ॥

पंचदशमुहूर्ता ज्ञेयाः बृहन्नक्षत्रेऽर्कसंक्रमणे बाणकृताः पंचचत्वारिंशन्मुहूर्ता ज्ञेयाः समनक्षत्रेऽर्कसंक्रमणे खरामसंख्यास्त्रिंशन्मुहूर्ता ज्ञेयाः उक्तं च नारदेन तासां मानं घटिकास्त्रिंशद्भवति षष्टयइति फलमाह महर्घसमर्घसाम्यमिति पंचदशमुहूर्तायां संक्रांतौ सर्वमन्नं महर्घत्वं प्राप्तं भवति पंचचत्वारिंशन्मुहूर्त्तसंक्रांतौ समर्घ त्रिंशन्मुहूर्तायां संक्रांतौ समं यथास्थितं भवति विधुदर्शनेपीति चंद्रदर्शनेप्येवमेव फलं वाच्यम् अयमर्थः जघन्यभे चंद्रस्य दर्शने महर्घम् बृहन्नक्षत्रे चंद्रदर्शने समर्घम् समभे चंद्रदर्शने साम्यम् ११ अथ प्रसंगात् कर्कसंक्रांतौ मेघविशोपकाननुष्टुभाह अर्कादीति कर्कसंक्रांतौ अर्कादिवारे सति एते अर विशोपका ज्ञेयाः यथा रविवारे कर्कसंक्रांतौ दश विशोपकाः एवं सोमे विंशतिः भौमे दश ॥

न्द्रेद्वादश गुरौ धृत्योष्टादश शुक्रेष्टादश शनौपंचेत्यर्थः १२ अथकीदृशस्यरवेः संक्रमोजातस्तुफलमिदंवज्रयाह स्यात्तेतिलेत्विति रविस्तेतिलेक
रणेनामकरणेचतुष्पदेचकरणेसुप्तःसंक्रमितःस्यात् गरादिपंचगरेवणिजेभद्रायांबवेबालवेचनिविष्टःसंक्रमितःस्यात् किंस्तुघ्नेसकौलवेशकु
नौचऊर्ध्वः ऊर्ध्वस्थितःसंक्रमितःस्यात् इहकरणाधिकरणकसंक्रांतौरविः अर्घवर्षणे अर्घेमूल्येवर्षणेवृष्टौउपलक्षणंतोर्ध्वंन्नैपिक्रमात्निष्टः
समः श्रेष्ठःस्यात् अयमर्थः सुप्तरविसंक्रमाअर्घवर्षणधान्येषुनिष्टः महार्घवृष्ट्याभावधान्याभावकारकाः एवंविनिष्टःसमःतथोर्ध्वः श्रेष्ठः उ
क्तंचश्रीपतिना धान्यार्घवृष्टिषुमवेत्क्रमशस्त्वनिष्टमध्येष्टतेति १३ अथरविसंक्रांतेः करणपरत्वेनवाहनवस्त्रायुधभक्ष्यलेपनजातिपुष्पाणिस
फलानिशार्दूलविक्रीडितत्रयेणोपनातिकयाचाह सिंहेति खड्गेति यावश्चेति स्यान्मल्लिकेति ववतोववमारभ्येकादशकरणेष्वनुक्रमेणवाहना

॥दिग्रेशनरवागजाःसूर्याधृत्योष्टादशसायकाः १२ स्यात्तेतिलेनागचतुष्पदेरविःसुप्तोनिविष्टस्तुगरादिपंचके किंस्तु
घ्नऊर्ध्वःशकुनौसकौलवेः निष्टःसमःश्रेष्ठइहार्घवर्षणे १३ सिंहव्याघ्रवराहरासभगजावाहद्विषट्घोटकाःश्वा
जौमौश्चरणायुधश्चववतोवाहारवेःसंक्रमे॥ ॥ ॥ ॥ श्रीविश्वनाथप्रसन्नोस्तु ॥

दीनिस्युः वाहनानिसिंहादीनि रासभोगर्दभः वाहनाद्विषन्महिषः लुलायोमहिषोवाहद्विषत्कासरसैरभाइत्यमरः अजोमेषः चरणायुधःकुक्कुटः नारदे
नतुविशेषउक्तः खशवाल्हीकवंगेषुसंक्रांतेधिष्ण्यवाहनम् अन्येदेशेषुतिथ्यर्धवाहनाःस्युर्ववादयइति अश्विन्यांयदासंक्रांतिस्तदाश्विन्याः योअश्व
स्तद्वाहनंस्यात् खशादिदेशेषुएवंसर्वनक्षत्रेषु अथवस्त्रंश्वेतादि हारितकंनीलवर्णं पांडुअरुणवर्णम् आरक्तमलक्तकवर्णम् कालंश्यामम् असि
तंश्वेतवर्णरहितंगर्दभवर्णमित्यर्थः दिग्वस्त्राभावः घनाभंमेघवर्णम् अथशस्त्रम् भुशुंड्यादीनिआयुधानिप्रसिद्धानि अथभक्ष्यम् अन्नंभक्तः परमान्न
पायसम् भैक्ष्यंभिक्षासमूहःपक्वान्नमपूपादि चित्रितान्नंहरिद्रादिरंजितम्॥ ॥ ॥ ॥ श्रीकालीप्रसन्नोस्तु ॥

मु॰टी॰ अथलेपो विलेपनम् मृगनाभिः कस्तूरी कुंकुमं केशरम् पाटीरं चंदनम् मृत्प्रसिद्धा रोचनं गोरचनमिति १४। १५ यावो लक्तकः ओतुर्मार्जा
सं॰प्र॰ रो भूमि माषयाजवादिरिति निशा हरिद्रा अंजनं कज्जलम् कालागरुरगरुविशेषः चंद्रकः कर्पूरः अथजातिः संकरभवा अनुलोमजाः प्रतिलोमजा
४० श्च अथ पुष्पम् पुंनागकं नामकेशरपुष्पम् मल्लिका वेलिः जपा ओडुपुष्पं जासवनम् शेषाणि प्रसिद्धानि सर्वत्र क्वचिद्योप्युक्तम् शिशुः
कुमारश्च गतालिका युवा प्रौढा प्रगल्भा च ततश्च वृद्धा वंध्या तिवन्ध्या च कृतार्थिनी च प्रव्राजिका चेति ववादिकानामिति तथा केचित् भोजनपा

वस्त्रं श्वेतरक्तपीतहारितकपांडुरक्तकालासितं चित्रकं बलदिग्घनाभमथ शस्त्रं स्याद्भुशुंडी गदा १४ खड्गो दंडशरासितोम
रमथो कुंतश्च पाशोंकुशोस्त्रं बाणस्त्वथ भक्ष्यमन्नपरमान्नं भैक्ष्यपक्कान्नकम् दुग्धं दध्यपि चित्रितान्नगुडमध्वाज्यं तथाश
र्करा थो लेपो मृगनाभिकुंकुममथो पाटीरमृद्रोचनं १५ यावश्चोतुमरो निशांजनमथो कालागरुश्चंद्रको जातिर्दैवतभूतस
र्पविहगाः पश्वेण विप्रास्ततः क्षत्रा वैश्यकशूद्रसंकरभवाः पुष्पं च पुंनागकं जाती वाकुलकेतकानि च तथा बिल्वार्कदूर्वा
बुजम् १६ स्यान्मल्लिका पाटलिका जपा च संक्रांतिवस्त्राशनवाहनादेः नाशश्च तद्वत्युपजीविनां च स्थितोपविष्टः स्वपतां च
नाशः १७ संक्रांतिधिष्ण्यात्परधिष्ण्यतस्त्रिभे स्वभे निरुक्तं गमनं ततोंगभे॥ न्नमप्युक्तं स्वर्णरौप्यताम्रपित्तलोहसीसत्रपुस्तथा कांस्यपाषाण
काष्ठं च मृत्पात्रं वेणुपात्रकमिति एवं संक्रमकालयानि वस्त्राशन वाहनादीन्यभिहितानि आदिशब्देनायुधलेपनजातिपुष्पाणि तेषां नाशो भवेत् च पु
नस्तद्वत्युपजीविनां वस्त्रादिवस्तूपजीविनां नाशो भवेत् स्थितोपविष्टः स्वपतां च यस्यां तैतिलादिसंज्ञायां करणादीनुक्तानि तत्तत्फलविशिष्टानां नाशः स्यादि
त्यर्थः १६ १७ अथ संक्रांतिवशेन प्रतिमनुष्यं शुभमुपजासाह संक्रांतीति संक्रांतिर्यस्मिन्नक्षत्रे स्यात्तत्तोऽपरधिष्ण्यं पूर्वनक्षत्रं तस्मात्स्वजन्मनक्षत्रं
गण्यं तच्चेत्प्रथमत्रिभे भवति तदा गमनं यात्रा स्यात् ततः प्रथमत्रिकानंतरं अंगभे षण्नक्षत्रेषु यदि स्वभे तदा स्फरवस्यात् ततस्त्रिभे॥ ६॥ ॥ राम: ५०

अथान्यदिंद्रवज्रयाह दिग्द्वारिभेइति पूर्वादिदिक्षुमेषाद्याःक्रमाद्दिग्द्वारराशयःइति दिग्राशिषुगंतव्यदिगवस्थितेषुसमुत्थापात्राप्रशस्ता प्रशस्तत्वमाह। अर्थदात्रीजयकारिणीचेति यथा मेषःपूर्वस्याम् वृषोदक्षिणस्यां मिथुनःपश्चिमायां कर्कउत्तरस्यां एवंसिंहादयोधनुरंतःपश्च पूर्वादिषुज्ञेयाः हानिभिति दिक्प्रतिलोमलग्नेविपरीतदिगवस्थितेलग्ने यथा पश्चिमायांमेषःउत्तरस्यांवृषः पूर्वस्यांमिथुनःदक्षिणस्यां कर्कः एवंपुनःपश्चिमादिषुसिंहाद योधनुरादयश्चज्ञेयाः तादृशेलग्नेगंतुःयात्राहानिंद्रव्यादिनाशंशत्रुतोभयंचकुर्यात दिग्द्वारभेलग्नगतेयात्रार्थविनयप्रदालग्नेदिक्प्रतिलोमेसा हानिदाशत्रुभीतिदेतिवराहोक्तेः ४७ अथशुभलग्नानिवसंततिलकयाह राशिरिति गंतुःपुंसःस्वजन्मसमयेयोराशिः शुभग्रहेश्चन्द्रबुधगुरुशुक्रैः

दिग्द्वारभेलग्नगतेप्रशस्तायात्रार्थदात्रीजयकारिणीचहानिंविनाशंरिपुतोभयंचकुर्यात्तथादिक्प्रतिलोमलग्ने ४७॥ राशिःस्वजन्मसमयेशुभसंयुतोयःस्वारिभाद्विधनगोपिसवेशिसंज्ञः लग्नोपगःसगमनेजयदोथभूपयोगैर्गमोविजयदोमुनिभिःप्रदिष्टः ४८ सूर्यःसितोभूमिसुतोथराहुःशनीशशीज्ञश्चबृहस्पतिश्च प्राच्यादितोदिक्षुविदिक्षुचापिदिशामधीशाःक्रमतःप्रदिष्टाः ४९ केंद्रेदिगधीशेगच्छेदवनीशःसालाटिनितस्मिन्नेयादरिसेनाम् ५०॥ ॥ संपुतोपिसराशिर्यात्राल ग्नोपगःशुभःअथवास्वारिभातस्वाशत्रुजन्मराशिजन्मलग्नादष्टमोयोराशिःसचेयात्रालग्नोपगतःशुभःस्यात अथयेराशिर्वेशिसंज्ञःजन्मसम येसूर्याक्रांतराशेर्द्वितीयोराशिर्वेशिसंज्ञः सचेयात्रालग्नोपगःस्यात तदागमनेजयदःस्यात अथवाभूपयोगैर्जातकोक्तैराजयोगैर्यात्रालग्नस्थितैर्गमोमुनि भिर्विजयदःप्रोक्तःजातकेराजयोगाद्रष्टव्याः ४८ अथदिक्स्वामिनउपजातिकयाह सूर्यःसितइतिस्पष्टार्थः ४९ अथदिगधीशप्रयोजनंमध्याछंदसाह केंद्रे तितस्मिन्दिगीशेसालाटिनिसतिअरिसेनांनेयात नगच्छेत ५० ॥ ५० ॥ ५० ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥

अथ लग्नलालाटियोगान् शार्दूलविक्रीडितेनाह प्राच्यादाविति प्राच्यायष्टदिक्क्रमेण विलग्नसदनात् एतेषु भावेषु सूर्यादिग्रहस्थिता लालाटिकाः स्युरिति वाक्यार्थः यथा तनौ लग्नस्थः तरणिः सूर्यः प्राच्यां गंतुर्लालाटिकः एवं भृगुसुतो लाभव्यये आग्नेय्यां कर्मस्थो भूसुतो दक्षिणस्यां तमो नवाष्टमगृहे नैर्ऋत्याम् सौरिः सप्तमे पश्चिमायां चंद्रः शत्रुगृहात्मजे वायव्यां बुधः पातालं गउत्तरस्यां गीष्पतिर्वित्तभ्रातृगृहे ईशान्यां गंतुर्लालाटिक इत्यर्थः कश्यपेनतु सूर्यो राशिवशेन लालाटिका उक्तास्ते यथा दिनेशाधिष्ठितो राशिर्यदा लग्नगतस्तदा यातुर्मृत्युप्रदः प्राच्यां दिशि सूर्यो ललाटगः सूर्यस्य राशितस्तस्मात् द्वादशे लग्नगे गृहे एकादशे वा आग्नेय्यां दिशि शुक्रो ललाटगः ललाटगः कुजो याम्ये दशमे लग्नगे गृहे लग्नगे नवमे राशावष्टमे वापि नैर्ऋते ललाटगः सैंहिकेयो यातुर्दीर्घनिधनप्रदः लग्नगे सप्तमे राशौ शनिः प्रत्यक् ललाटगः षष्ठराशौ लग्नगते पंचमे वापि चांद्रमाः ललाटगो वायुदिशि याद्धर्मृत्युप्रदस्तदा चतु

प्राच्यादौ तरणिस्तनौ भृगुसुतो लाभव्यये भूसुतः कर्मस्थोऽथ तमो नवाष्टमगृहे सौरिस्तथा सप्तमे चंद्रः शत्रुगृहात्मजेऽपि च
बुधः पातालगो गीष्पतिर्वित्तभ्रातृगृहे विलग्नसदनाल्लालाटिकाः कीर्तिताः ॥ ५१ मृगे गत्वा शिवे स्थित्वादितौ गच्छन्जये
पून् मैत्रप्रस्थायशाक्रे हि स्थित्वा मूले व्रजंस्तथा ५२ प्रस्थाय हस्ते निलतक्षधिष्ण्ये स्थित्वाजयार्थी प्रवसेद्द्विदैवे ॥ ५३ ॥

र्थे राशौ लग्नस्थे बुधः सौम्ये ललाटमः राशौ तृतीये लग्नस्थे द्वितीये चंद्रपूजितः ललाटगश्चंद्रमौलेर्दिशि यातुर्विनाशदः इति अत्र ललाटव्यतिरिक्ते कंटक स्थाने यदि दिगधीशस्तिष्ठति तदा यात्रा शुभा ऽन्य था शुभमिति त्वम ५१ अथ पर्युषितयात्रायोग चतुष्टयमनुष्टुभेंद्रवज्रयाचाह मृगेति प्रस्थायेति गृहस्य गृहाद्यातव्या दिगभिमुखं कस्यचिदिष्टस्य गृहे गत्वा प्रस्थाय आर्द्रायां तस्मिन्नेव गृहे स्थित्वेषित्वा दितौ पुनर्वसौ गच्छन् तद्ग्रहं त्यक्त्वा ग्रामाद्बहिरेव गच्छन् रिपून् शत्रून् जयेत् अयमेको योगः एवमेवानुराधायां प्रस्थाय शाक्रे ज्येष्ठायां स्थित्वा मूले व्रजन् तथा जयेदित्यर्थः अयं द्वितीयो योगः ५२ तथा हस्ते प्रस्थाय निलतक्षधिष्ण्ये स्वाती चित्रे स्थित्वा द्विदैवे विशाखायां जयार्थी भूपादिः प्रवसेद्देशांतरं गच्छेत् अयं तृतीयः ॥ ५३ ॥ ५३ ॥ २ ॥ २ ॥

वसंतपुष्पेषु निजसीम्नि स्वनगरप्रांते च स्थितः सन्यद्येकरात्रोषितः स्यात्तदाऽवनीशो राजा स्मां भूमिं शत्रोरितिशेषः लभते जयेन प्राप्नोतीत्यर्थः अयं चतु
र्थोयोगः ५३ अथसमयबलमनुष्टुभाह उषःकालइति सन्शब्दश्चरणचतुष्टयेपिसंबध्यते उषःकालः पूर्वां विना यानेयात्रायां सन् एवं सर्वत्र वा
हेणतु दिग्विशेषस्तमथविशेषप्रशस्तोभिहितः यथा पूर्वाह्णे तूत्तरां गच्छेन्मध्यान्हे पूर्वतो व्रजेत् अपराह्णे व्रजेयाम्यामर्धरात्रे तु पश्चिमामिति ५४ अ
थलग्नादिभावानां संज्ञा अनुष्टुभाह लग्नात्भावाइति तन्मनःस्वांतत्मानसंमनइत्यभिधानात् आगमःप्राप्तिः अन्यत्स्पष्टं एवंविधसंज्ञाकथनप्रयो
जनं तु क्रूरसाहित्येतत्तद्भावानांपीडा शुभग्रहसाहित्येतत्तद्भावानांशुभमित्यर्थः ५५ शालिन्याविशेषफलमाह केंद्रेकोणइति शुभग्रहाःयदिकेंद्रको

वसंतपुष्पेनिजसीम्निवैकरात्रोषितःस्मां लभतेवनीशः ५३ उषःकालोविनापूर्वांगोधूलिःपश्चिमांविना विनोत्तरांनि
शीथःसन्यानेयाम्यां विनाभिजित् ५४ लग्नाद्भावाःक्रमाद्देहः १ कोशः २ धानुष्क ३ वाहनं ४ मंत्रो ५ रि ६ मार्ग ७ आयुर्हृ
त् ९ व्यापारा १० गम ११ व्यया १२ ५५ केंद्रत्रिकोणसौम्यखेटाःशुभास्युर्यानेपापास्त्र्यायषट्खेषुचंद्रः नेष्टोलग्नात्यारिरं
ध्रेशनिःखे १० स्तशुक्रोलग्नेट्नगांत्यारिरंध्रे ५६ योगात्सिद्धिर्धरणिपतीनामृक्षगुणैरपिभूदेवानाम् ॥ ७ ॥ १ ॥

णे १।४।७।१०।९।५ स्युस्तदायानेशुभफलदाःस्युः पापास्त्र्यायषट्खेषु ३।११।६।१० शुभफलदाःस्युः चंद्रोलग्नात्यारिरंध्रे १।१२।६।८ नेष्टः अशु
भफलदः शनिःखे दशमेनेष्टः शुक्रोस्तेसप्तमेनेष्टः लग्नेडिति लग्नेट्यानालग्नस्वामीनगांत्यारिरंध्रेसप्तमद्वादशषष्ठाष्टमेषु चेत्तदानेष्टः अशुभफ
लदइत्यर्थः शुक्रःलग्नपोमृत्युदोयानेरंध्रास्तारिव्ययोपगःकेप्याहुर्भयदोधर्मेशेषस्थानेशुभावहइति ५६ अथयोगयात्राप्यास्यांते तदारंभप्रयोजनप्र
काकुलकेनाह योगादिति धरणिपतीनांराज्ञांयोगाद्वक्ष्यमाणयोगयात्रालग्नवशाद्दृष्टिपितिथ्यादेः सिद्धिर्वांछितकार्यनिष्पत्तिःस्यात् भूदेवानांब्राह्मणानां
ऋक्षगुणैर्नक्षत्रगुणैश्चंद्रबलताराबलविहितनक्षत्रादिभिः सिद्धिर्भवति अपिशब्दात्संचागशकुनादिधनावश्यकता चौराणांवक्ष्यमाणैःशुभसूचकशकुनैः

सिद्धिर्भवति एतद्भिन्नानांमनुजानांमुहूर्त्तात् गिरिशभुजगमित्रादितिविहिननक्षत्रस्वामिकमुहूर्त्तात्सिद्धिर्भवति ५७ अथयोगयात्रालग्नंमंजुभाषिण्याह स
हजेरविरिति रविःसहजेतृतीयःस्यात् शशीचंद्रोदशमभेदशमस्थाने शनिमंगलौरिपुगृहेषष्ठस्थानेस्यातांसितःशुक्रेपंचमे बुधोहिबुकेचतुर्थे गुरुरपि
लग्नगंश्चेत्स्यात् एवंविधेयोगेराजाप्रचलितः अचिरात्स्वल्पकालेनैवारीन्जयतिवशीकरोतीत्यर्थः ५८ अथयोगांतरंगाथयाह भ्रातरिसौरिरिति॥
भ्रातरितृतीयेशनिःवैरिणिषष्ठेभूमिसुतोमंगलःअर्के आयगतेएकादशे एवंविधेयोगेराजाशत्रुजयोभवेत् चेदीड्यगुरुःशुक्रोऽनुकूलःयातव्यदिक्पृष्ठ

चौराणामपिशकुनैरुक्ताभवतिमुहूर्त्तादपिमनुजानां ५७ सहजेरविर्दशमभेशशीतथाशनिमंगलौरिपुगृहेसितःसुतेहि
बुकेबुधोगुरुरपीहलग्नगःसजयसरीन्प्रचलितोऽचिरान्नृपः ५८ भ्रातरिसौरिर्भूमिसुतोवैरिणिलग्नेदेवगुरुःआय
गतेर्केशत्रुजयश्चेदनुकूलोदैत्यगुरुः ५९ तनौजीवइन्दुर्मृतौवैरिगोऽर्कःप्रयातोमहीद्रोजयत्येवशत्रून् ६० लग्नतःस्या
देवपुरोधाःलाभधनस्थैःशेषनभोगैः ६१ द्यूनेचंद्रेसमुदयगेर्केजीवेशुक्रेविदिधनसंस्थे ईदृग्योगेचलतिनरेशोजेता
शत्रून्गरुडइवाहीन् ६२ वित्तगतःशशिपुत्रोतरिवासरनाथः॥

॥ वर्तीभवति ५९ अन्ययोगांतरंगाथयाह तनौजीवइति स्पष्टा
र्थः तथाचनारदःजीवार्कचंद्रालग्नारिरंध्रगायदिगच्छतःतस्यायेस्वलमैत्रीचनस्थिरारिपुवाहिनीति ६ अथान्ययोगंपंक्त्याह लग्नगतइति लग्ने
गुरुःस्यात् अन्येग्रहालाभधनस्थाःएकादशाद्वितीयस्थाश्चेदेवंविधेयोगेराज्ञोविजयः ६१ अन्ययोगमन्नमाह द्यूनेइति चंद्रेसप्तमस्थेसति अ
र्केसमुदयगेलग्नगेसति जीवेशुक्रेविद्बुधेएतेषुत्रिषुधनुसस्थेषुसत्सुएवंविधेयोगेनरेशश्चेत् चलतितदाशत्रून्जेताजेष्यति कान्निवगरुडो
हीन्सर्पान् यथाजयति ६२ अथान्ययोगंचित्रपदयाह वित्तगतइति बुधोद्वितीये वासरनाथःसूर्यस्तृतीये शुक्रेलग्नेएवंविधेयोगेचेद्राजाचलतितदा

शलभाइवस्युः यथा शलभा अग्नौ स्वयमेव गत्वा पतंति तथा शत्रवोऽपि गंधराजघ्नतापानले प्रतिष्यंतीत्यर्थः ६३ अथान्यं योगमाथयाह उदयेरविरिति उदये रविः शनिः षष्ठः चन्द्रो दशमः स्यात् एवंविधे योगे वसुधापती राजा यदि याति तदा रिपुवाहिनीं शत्रुसेनां वशामिति ६४ अथान्ययोगद्वयं जलोद्धतगत्या ह तनौ शनिकुजाविति इति आरभ्य वसुधापतिर्यदि याति रिपुवाहिनीवशमे तीत्युत्तरार्द्धे सहजे कुजे इत्येतत्पर्यन्तमनुवर्त्तते तेन यत्र निर्देशो नास्ति तत्र नि गमितोराज्ञो विजयः स्यादिति वाक्यार्थो ज्ञेयः तनौ लग्नस्थौ शनिमंगलौ स्यातां रविर्दशमे बुधो लाभे दशमे स्याद् भृगुसुतो वा लाभे दशमे वा स्यात् एवंविधे योगे च चलितस्य राज्ञोऽयमेको योगः अथ द्वितीयः त्रिलाभरिपुभेषु ३।११।६ एषन्यतमस्थानस्थितो भूस्कृत शनी स्याता यस्मिन्कस्मिंश्चित्स्थानेगुरुज्ञ

लग्नगतेभृगुपुत्रेस्युः शलभाइवसर्वे ६३ उदयेरविर्यदिसौरिररिगः शशीदशमेपि वसुधापतिर्यदियातिरिपुवाहिनीवश मेति ६४ तनौशनिकुजौरविर्दशमभेबुधोभृगुसुतोपिलाभदशमे त्रिलाभरिपुभेषुसूसुतशनीगुरुज्ञभृगुजास्तथाबलयु ताः ६५ समुदयगेविबुधगुरौमदनगतेहिमकिरणे हिबुकगतौबुधभृगुजौसहजगताःखलखचराः ६६ त्रिदशगुरुस्तनुगो मदनेहिमकरणोरविरायगतः सितशशिजावपिकर्मगतौरविसुतभूमिसुतौसहजे ६७॥ भृगुजाबलयुताः स्युस्तदा ए

वंविधेयोगेतथाराज्ञोविजयइत्यर्थः ६५ अथान्यंयोगंत्वरितगतिश्छन्दजनमैरित्यनेनछंदसाह समुदयगेइति समुदयगेलग्नस्थेबृहस्प तौसति हिमकरणेचंद्रेमदनगतेसप्तमस्थेसति चतुर्थस्थौबुधशुक्रौस्यातां खलखचराःपापग्रहाः सहजगताः तृतीयगाःस्युः एवंविधेयोगेवसु धापतिर्यदियातिरिपुवाहिनीवशामेति ६६ अथान्यंयोगंसमुदस्यानजलजगैर्गदिताश्चरवातिलक्षणलक्षितयाह त्रिदशगुरुरिति बृहस्पतिर्लग्ने चंद्रःसप्तमेशुक्रबुधौदशमेसूर्यएकादशेशनिमंगलौसहजगताःतृतीयेएवंविधेयोगेगंतुराज्ञोविजयएव ६७॥ ६७॥ ६७॥

अथान्यं योगं स्यादनुकूलाभतनगगश्चेतिलक्षणलक्षितयानुकूलयाह देवगुराविति गुरौ चंद्रे वा लग्ने राति सूर्ये षष्ठे बुधः पंचमस्थाने शनिर्दशमः शुक्रश्च
तुर्थे स्यात् एवंविधे योगे जिगमिषोराज्ञो विजय एव ६८ अथान्यं योगं ननरर घटितानुमंदाकिनी तिलक्षणलक्षितया मंदाकिन्याह हिमकिरण इति बु
धो बली चेच्चंद्रो लग्ने स्यात् हीति निश्चयेन बृहस्पतिश्च केंद्रगतः यदि निर्बलिनो नीचाद्यशुभाधिकारप्राप्तो बलरहितः सन् द्वादशतृतीयषष्ठनवमाना
मन्यतमस्थानस्थश्चंद्रस्तथैवंविधे योगे गंतू राज्ञो विजय एव ६९ अथान्यं योगं अभिनवतामरसं नजजायहविलक्षणलक्षितेनाभिनवतामरसछंदसा
ह अशुभखमैरिति अशुभग्रहैः अनवाष्टमदनस्थैः नवमाष्टमसप्तमस्थानव्यतिरिक्तस्थानस्थैः कविः शुक्रः चतुर्थे तृतीयैकादशस्थानस्थः केंद्रगे

देवगुरौ वा शशिनि तनुस्थे वासरनाथे रिपुभवनस्थे पंचमगेहे हिमकरपुत्रः कर्मणि सौरिः स्यादिसितश्च ६८ हिमकिरणश्च
तो बली चेत्तनौ त्रिदशपतिगुरुर्हि केंद्रस्थितः व्ययगृहजारिधर्मस्थितो परिभवति निर्बलश्चंद्रमाः ६९ अशुभखगैरनवा
ष्टमदस्थैर्हिबुकसहोदरलाभगृहस्थः कविरिह केंद्रगगीष्पतिदृष्टो वसुचयलाभकरः खलु योगः ७० रिपुलग्नकर्म
हिबुके शशिजे परिवीक्षिते शुभनभोगमनैः व्ययलग्नमन्मथगृहेषु जयः परिवर्जिते शुभनामधेरैः ७१ लग्ने यदि
जीवः पापायैर्दिलाभे कर्मण्यपि चेद्राज्याधिगमः स्यात्॥ ९ तो गीष्पतिर्गुरुस्तेन दृष्टः एवंविधे योगे वसुचयो द्रव्यसमूहस्तस्य ला

भकरः स्यात् ७० अथान्यं योगं यात्रालग्नं प्रमिताक्षरा सजसैः कथितेति लक्षणलक्षितया प्रमिताक्षराछंदसाह रिपुलग्नेति षष्ठलग्नदशमचतुर्था
नामन्यतमस्थाने स्थे बुधे शुभनभोगमनैः शुभग्रहैः परिवीक्षिते दृष्टे सति द्वादशलग्नसप्तमस्थानव्यतिरिक्तस्थानस्थितैरशुभनामधेरैः पापग्रहैरु
पलक्षिते सति एवंविधे योगे जिगमिषो राज्ञो विजय एव ७१ अथान्यं योगं हयं सौ स मणिमालाच्छिन्ना गुहवक्त्रैरिति लक्षणलक्षितयाह लग्न इति।
लग्ने गुरुः पापग्रहा अपि दिलाभे एकादशे कर्मण्यपि दशमेऽपि चेत्स्युः एवंविधे योगे प्रचलितस्य राज्ञो राज्याधिगमः राज्यप्राप्तिः स्यात् अथवा द्यूने सप्तमे

बुधशुक्रौस्यातांचंद्रोहि ४॰ चतुर्थेस्यादेवंविधयोगेसर्वैर्मुनिवर्यैस्तद्वत्फलमुक्तंराज्याधिगमःस्यात् ७२ अथान्ययोगत्रयंननततगुरुभिश्चंद्रिकाश्चतु
भिरितिलक्षणलक्षितेनचंद्रिकाछंदसाह रिपुरिति अत्रस्थानांग्रहाणांचक्रमाम्यायथासंख्यमन्वयः यथा रिपौषष्ठेशुक्रः लग्नेजीवः अष्टमेचंद्रः एवंवि
धेयोगेगंतुराज्ञोविजयएव अयमेकोयोगः अथद्वितीयः बुधभृगुजौतुर्यगेहस्थितौचतुर्थस्थानस्थौस्यातां चंद्रमामदनभवनगः सप्तमस्थानस्थः एवं
विधेयोगेगंतुराज्ञोविजयएव अथतृतीयोयोगः वाचंद्रमाअंबुगः चतुर्थगः शशिसुतभृगुजयोरंतर्गतत्वंएकराशावेववज्ञेयं अन्यथाचतुर्थस्थानस्थचंद्रस्य
बुधशुक्रकृतदुरधरायोगमेघावस्तत् ७३ अथान्ययोगद्वयंसजससगौचकथितःकलहंसइतिलक्षणलक्षितेनकलहंसछंदसाह सितेति लग्नेशुक्रः

घूनेबुधशुक्रौचंद्रोहिबुकेवातद्वत्फलमुक्तंसर्वैर्मुनिवर्यैः ७२ रिपुतनुनिधनेशुक्रजीवेंदवोत्यथबुधभृगुजौतुर्यगेहस्थितौ
मदनभवनगश्चंद्रमावांबुगःशशिसुतभृगुजांतर्गतश्चंद्रमाः ७३ सितजीवभौमबुधभानुतनूजास्तनुमन्मथारिहिबुकत्रि
गृहेचेत् क्रमतोरिसोदररवशात्रवहोराहिबुकायगैर्गुरुदिनेस्वलंकृतैः ७४ सहजेकुजोनिधनगश्चभार्गवोमदनेबुधोर
विरीतनौगुरुः अथचेत्सुरीज्यसितभानवोजलत्रिगताहिसौरिरुधिरौरिपुस्थितौ ७५ ॥ ९ सप्तमेजीवः षष्ठेभौमः चतुर्थेबुधःतृ

तीयेशनिः एवंविधेयोगेगंतुराज्ञोविजयएव एकोयोगः अथान्यः गुरुदिनेबृहस्पतिवारे अखिलखेटैः समस्तग्रहैः सूर्यादिभिः क्रमतोरिसोदरेत्यादि
स्थानस्थितैर्यथा षष्ठेर्कः तृतीयेचंद्रः दशमेभौमः षष्ठेबुधः लग्नेगुरुः चतुर्थेशुक्रः एकादशेशनिः एवंविधेयोगेपिगंतुराज्ञोविजयएव ७४ अथान्ययो
गद्वयंसजसजसनगौचकथिताप्रबोधितेतिलक्षणलक्षितप्रबोधिकाछंदसाह सहजेइति तृतीयेभौमः अष्टमेशुक्रः सप्तमेबुधः षष्ठेसूर्यः लग्नेगुरुः एवंवि
धेयोगेगंतुराज्ञोविजयएव अयमेकोयोगः अथान्यः अथेति ईज्यसितभानवोगुरुशुक्रसूर्याःजलत्रिगताःचतुर्थतृतीयस्थानस्थाः सौरिरुधिरौशनिमंग
लौषष्ठस्थितौ एवंविधेयोगेहिनिश्चितंराज्ञोजयःस्यात् ७५ ॥ ७५ ॥ ७५ ॥ ७५ ॥ ७५ ॥ ७५ ॥ ॐ ॥

मु॰ चिं॰ उच्चसंस्थोऽत्रगतश्चंद्रोऽत्यसौ ... र विर्गुरुः संजीवनसमाख्योऽयं मृत्युयोगापहारकः १२ एकर्क्षगौ जीवशुक्रौ स्यातामन्योन्यसप्तगौ भयंकराख्ययोगोऽयं यातु
या॰ प्र॰ भीतिप्रदः स्मृतः १३ उच्चमूलत्रिकोणेषु वर्त्ततेगुरुभार्गवौ अभयाभिधयोगोऽयं भयंकरविनाशनः १४ भूर्येशोऽव्ययगो नीचः पुत्रस्थाने शनैश्चरः
११ विदारिकसमाख्योऽयं यातुः पत्नीं निहंत्यसौ १५ मार्गेशः शनिसंयुक्तः सप्तमस्तेन तो ग्रहः विदारिकमिमं मन्या यातुः पत्नीविनाशकं १६ सप्तमे लग्नपा
स्तस्मात्केतिषु ... खेचराः कुटुंबहारको योगो यातुः स्त्रियं तमो हरेत् १७ दुर्बलो यदि मार्गेशो निवसेत्पापमध्यगः पापकुंजरयोगोऽयं यातुः पत्नीं निहंत्यसौ १८ कु
मार्गेशात्सप्तमे भानुः पत्नीमक्रूरखेचरः विदारिकाख्य एवासौ भार्यामरिवशं नयेत् १९ स्वोच्चमूलत्रिकोणस्थः सौम्यः पापविवर्जितः आनंदार्णवयोगोऽयं
मणिवज्रधावहः २० रत्नावल्यां उदयारिनभस्तलगे दिनकृद्यमशीतकरैः नभवंत्यस्य सोऽभिमुखाहरिण्य इव केसरिणः २१ दैवज्ञवल्लभे ज्ञे सितेन सहिते स्त
गे विधौ बंधुगे त्रवसतां महीभुजां संगरे रिपुगणो विकीर्यते मूलमाशिरिव मातरिश्वना २२ मूर्त्तिवित्तसहजेषु संस्थिताः शुक्रचंद्रसुततिग्मरश्मयः यस्य
यानसमये रणांगणे तस्य याति शलभाद्वारयः २३ यात्राशिरोमणौ यो याति जीवे तनुमे महीशः क्रूरस्थितैर्व्योमस्यथवायसंस्थैः तस्याग्रतः संपतिवैरि
सेनाश्रीतिर्भूपाणामिवनास्थिरास्यात् २४ राजमार्त्तण्डः लाभारिदुश्चिक्यगतौ यमारौ रौद्रान्विता भार्गवसौम्याः यस्यप्रयाणे विलयं प्रयाति तस्य द्वि
षः सर्वरसं यथाम्भः २५ फलप्रदीपे लाभविक्रमसुतस्वस्थिते कबोकंटकस्य गुरुणा निरीक्षिते यूनरंध्रभवर्जितैः खलैः स्याद्गतो भिमुखसिद्धिभा
क्नृपः २६ सौम्यग्रहैः केन्द्रतपःसुतस्थैः क्रूरैस्त्रिलाभारिगतैर्गताये कोपानलः शांतिमुपैति तेषां विसप्त्विनारीनयनांबुपातैः २७ वराहः एकोऽपि
जीवार्ककुजार्कजानां स्वोच्चे विलग्ने स्वगृहे यदींदुः यातस्य यात्यत्र पराग्रणाशमहाकुलानीव कुटुंबभेदैः २८ चंद्रे सुलग्ने च गुरौ विलग्ने ज्ञशुक्रयोः
कर्मणि लाभगेऽर्के सौरारयोर्भ्रातृमयोश्च यातो नृपः स्वमृत्यानिवशास्ति शत्रून् २९ नारदः स्वोच्चस्थे लग्नगे जीवे चंद्रे चापगते यदि गतो राजा रिपून्हंति पि
नाकी त्रिपुरं यथा ३० शुक्रे त्रिकोणकेंद्रस्थे लग्ने चंद्रे च यवारवौ शत्रून्हंति गतो राजा ब्रह्मद्वेषः कुलं यथा ३१ पापास्त्ववीर्ये हिबुके सितज्ञौ [illegible] विलग्ने राम
मृगलांछने त्रिमे यस्योद्गतस्य बलं रिपूणां कुतत्कृतघ्नेष्विव याति नाशम् ३३ यस्योदयास्तारिचतुस्त्रिसंस्थाः शुक्रोगिरांगारकसौम्यसौराः द्विषद्बलं स्त्रीवदना ९९

नितस्यैक्ष्येतानिकांतानविलोकयंति ३३ पूर्वोक्तयोगेधनगोबुधश्चेच्छशांकसूर्यौवरशायसंस्थौ अस्मिनातस्यालिकुलोपगीतानानावनस्था द्विरदा
भवेति ३४ वराहः त्रिषण्णवांत्येषबलःशशांकोबुधोबलीयस्यगुरुस्वकेंद्रेतस्यारियोषाभरणैः प्रियाणि प्रियाप्रियाणांजनपतिसैन्ये ३५ चंद्रोऽबलःबु
धोबलीउभौवित्रिषण्णवांत्येषुएवभवतस्तदायोगः केंद्रोपयातेनवीक्षितेगुरुणास्वायतुर्यगसितेपापैरनवाप्तसंज्ञौवक्रकितनयदासुपक्षरूपः ३६ षष्ठ
ष्टगोशुक्रबुधौप्रयाणेक्रूरेशपूज्योगमनेयदिस्यात् रिपुःप्रणाशंविषयेषुसौख्यंप्राप्नोतिकीर्त्तिंविपुलंचभोगं ३७ गर्व्वबलाभारिगतेऽर्कपुत्रे चतुर्थगेहे
स्वगुरौप्रयाति यदापुमान्सहिरैर्द्वयानंकीर्त्तियशःसिद्धिसहस्रमेति ३८ केंद्रस्थानेक्रूरपतिगुरौकंटकस्थेक्रूरेतुजेऽच्छिद्रेसौम्येप्रवसतिचपक्षवृद्धमिंदु यदि
स्यात् येयांक्रूरारिपुसहजगाराह्रुकेंद्रवस्तौवायुःकीर्त्तिद्रविणस्तुलंतेलभंतेयशश्च ३९ मूर्त्तौशुक्रेक्रूरपतिगुरौछिद्रगेवात्रिकोणेकेंद्रस्थानेशशिनि
कुजालाभगावायकिस्तुः येभूपायांतिशत्रुंविपुलधनमथोसेनानाशंरिपूणांकीर्त्तिंशुद्धिश्चाश्वक्रमथितरिपवस्तेक्रूरवादाद्व्रजंति ५० होरासंस्थक्रूरपति
गुरौभार्गवेकंटकस्थेषष्ठेचंद्रेव्रजतियदिवाकार्ययोगात्क्षितीशः प्राप्नोत्यर्थंकनककुरगंवस्त्रलादिकोशमायुःकीर्त्तिंजयनिचतदामत्तमातंगयूथम् ।
५१ लग्नारिकर्महिबुकेषुशुभेक्षितेषुयूनांत्यलग्नरहितेषुशुभग्रहेषु यातुर्भयंनभवतिप्रतरेत्समुद्रंयद्यप्सनापिकिमुतारिसमागमेषु ५२ एकांतरर्क्षे
भृगुजाद्रासौम्येस्थितेसूर्यसुताद्गुरौवा प्रव्रस्यतेरिनेविराजतस्यवेषाधिकोभूत्यईश्वरस्य ५३ शुक्राद्गोमाद्रासौराज्ञोवाद्राबुधः एकांतरेतृतीयस्थानेयत्र
कुत्रस्यात्सयोगः निरंतरंयस्मिन्भवनेषुपंचक्रूरग्रहाः स्थितौदिवसंकरेणवर्जिता यियासितोयदिचभवतितेषतस्तदापरातलभिर्दिवाचकंतंति ५४ प्राक्कपा
लसंस्थैः पश्चिमादिशिपृष्ठगतं अपरकपालस्थैःप्राच्यांस्वमध्यस्थेन्तरदिशि अर्द्धरात्रस्थैर्दक्षिणादिशि बुधभार्गवमध्यगतेहिमगौहिबुकोपगते
चन्द्रेतुप्रवसेत् ... दिशंयदिवाकरः पुरुहूतपमंप्रति ५५ सितेंदुजौचतुर्थगौनिशाकरश्चसप्तमे यदानदागतोनृपःप्रशास्त्यरीन्वितारणान् ५६
शुक्रश्चवाक्पतिर्बुधोधनसंस्थाः सप्तमेराशिनिलग्नगतेऽर्के निर्गतोनृपतिरेतिकैलार्थोवर्षतियदीविनिहत्य ५७ सूर्येन्दुबलवर्जितौबलयुतौलग्नेशजौ
प्रवैरोपतालेदशमेपिवाराशिक्रूतोलग्नस्थितोवाक्पतिः षट्सप्ताष्टमवर्जितेषुभृगुजःस्थानेषुयस्यस्थितोयातुस्तस्यन विद्विषोरणमुखेतिष्ठंतियोपाद्

शकुनलग्नादीन्यनिंद्यानि चेतो विशुद्धिश्च मास्येवात्र कस्य प्राबल्यमित्याह अथेति शकुनादितोपि सकाशात् चेतो विशुद्धिरधिका तां चेतो विशुद्धिं विनाने यात् न गच्छेत् कस्मात् निमित्तशकुनादिभ्यः प्रधानं हि मनोजयः तस्माधियान्स्तानृणां प्रधानं हि मनोजय इति ७८ अथयात्रायामवश्यनिषिद्धनिमित्तानिव संतमालिका छंदसाह तल्लक्षणं विषमे ससजगा समे चेत् सभरयश्च वसंततिमालिका सा विषमसमचरणे व्रतबंधनेति व्रतबन्धनं यज्ञोपवीतम् देवप्रतिष्ठाप सिद्धाकरपीडा विवाहः उत्सवो होलिकादि सूतकान्ते मरणसूतकं च एषाम्प्रारम्भे आप्यावद्दिनसमाप्यानामसमाप्तो समाप्तिं विना कदापि नैव चलेत् गच्छेत् नारदः उद्वाहोपनयोद्दोहप्रतिष्ठाशौचसूतके आसमाप्ते न कुर्वीत यात्रां तत्र जिजीविषुरिति अकालेति विद्युत्प्रसिद्धा घनो मेघगर्जितं वर्षा वृष्टिः तुहिनं नीहारः

सिद्धिर्भवेद्यपुनः शकुनादितोपि चेतोविशुद्धिरधिकानचतां विनेयात् ७८ व्रतबन्धनदेवतप्रतिष्ठाकरपीडोत्सवसूतकास मासौ न कदापि चलेदकालविद्युतघनवर्षातुहिनेपि सप्तरात्रम् ७९ महीपतेरेकदिने पुरात्पुरे यदा भवेतां गमनप्रवेशकौ भवारशूलप्रतिशुक्रयोगिनी विचारयेन्नैव कदापि पण्डितः ८० यद्येकस्मिन्दिवसे महीपतेर्निर्गमप्रवेशौ स्तः तर्हि विचार्यः शुधियाप्रवेशकालो न यात्रिकस्तत्र ८१ प्रवेशान्निर्गमं तस्मात्प्रवेशं नवमे तिथौ॥ छ ॥ २ ॥ २ ॥ ॥

एषु प्रारब्धेष्वेव कालेषु सत्सु सप्तरात्रं दिनसप्तकं न चलेत् नारदः अकालजेषु नृपति र्विद्युद्गर्जितवृष्टिषु उत्पातेषु त्रिविधेषु सप्तरात्रं न तु व्रजेदिति ७९ अ थैकदिनमध्ये गमनप्रवेशविशेषं वंशस्थवृत्तेनाह महीपतेरिति स्पष्टार्थः यथा वाराणसीस्थानात् चरणादि नगरे प्रवेशः तत्रैतान्दोषान्पंडितो नैव विचारयेत् ८० अथैकदिवसमध्ये निर्गमप्रवेशास्यरूपे कार्ये विविकीर्षिते किं विचार्यमित्यार्ययाह यद्येकस्मिन्निति स्पष्टार्थेयम् ८१ अथ प्रयाणे नवमीं शुभमनुष्टु माह प्रवेशादिति गृहप्रवेशतिथितो नवमे तिथौ निर्गमनं न कुर्यात् पुनश्च गमनदिवसात् नवमे तिथौ गृहप्रवेशनं कुर्यात् एवं नक्षत्रे च गमननक्षत्रान्नवमे नक्षत्रे गृहप्रवेशम् तथा गृहप्रवेशनक्षत्रात्।

नवमनक्षत्रे गमनं च न कुर्यात् वारेच गमनवारान्नवमवारे गृहप्रवेशम् गृहप्रवेशवासरान्नवमवारे गमनं न च कुर्यात् गर्गः प्रवेशान्निर्गमश्चैव नि
र्गमाच्च प्रवेशनम् नवमे यातु नो कुर्याद्विरम्ये वारे तिथावपीति ८२ अथ यात्रादिनीयं विधिं शालिन्याह अग्निं हुत्वेति स्पष्टार्थम् ८३ अथ नक्षत्रदोहदानुशा
र्दूलविक्रीडितेनाह कुल्माषानिति अत्र चतुर्थचरणे प्रियंग्वपूपेत्यत्र छंदोभंगोस्ति सगणप्रसेपाकरणात् स्त्वंग्रे हे वेति पिंगलसूत्रेण [illegible] कारेरफसं
योगेपरत्र वर्णस्य लघुत्वाभिधानात् सगण एव तथा च कालिदासः गृहीतप्रत्युद्गमनीयवस्त्रेति ह्यादौ से अश्विन्यादिसप्तविंशति [illegible] कुल्माषा
दिकं नक्षत्रदोहदम् इदं भक्ष्याभक्ष्यवर्णभेदेन देशभेदेन विचार्यम् भक्ष्यसंभवे भक्षयेत् अभक्ष्यसंभवे अवलोकयेत् पश्येत्स्पृशेद्वेति ध्येयम् यथा अश्वि

नक्षत्रे च तथा वारे नैव कुर्यात्कदाचन ८२ अग्निं हुत्वा देवतं पूजयित्वा नत्वा विप्रानर्चयित्वा दिगीशम् दत्वा दानं ब्राह्मणेभ्यो
दिगीशं ध्यात्वा चित्ते भूमिपालोधिगच्छेत् ८३ कुल्माषांस्तिलतंडुलानपि तथा माषांश्च गव्यं दधि त्वाज्यं दुग्धमथैणमांसमप
रं तस्यैव रक्तं तथा तद्वत्पायसमेव चाषपललं मार्गं च शाशं तथा षाष्टिक्यं च प्रियंग्वपूपमथवा चित्राण्डजान्सत्फलं ८४ कौर्मं
सारिकगौधिकं च पललं शाल्यं हविष्यं ह्रयोद्भूतं स्यात्कृसरान्नमुद्गमपि वा पिष्टं यवानां तथा ॥ ॥ ॥ २ ।

न्यां कुल्माषानसतर [illegible] भरण्यां तिलमिश्रतंडुलान् कृत्तिकायां माषान् रोहिण्यां गव्यं गोरसं च विदेधि मृगे गव्यमाज्यं घृतं आर्द्रायां दुग्धं गव्यमे
व पुनर्वसौ ऐणमांसं हरिणमांसं पुष्ये मृगस्य रक्तं आश्लेषायां पायसं मघायाम् चाषस्य पललं मांसं पूर्वफल्गुन्यां मृगस्येदं मार्गं मांसम् उत्तरफल्गुन्यां शा
सेदं शशमांसम् हस्ते षाष्टिक्यं षष्टिकान्नं चित्रायां प्रियंगुः फलिनी एके स्वात्यामपूपं विशाखायां चित्रान् नानावर्णान् अंडजान् पक्षिणः अनुराधायां सत्फलम्।
उत्तमफलं मन्नादिकम् ८४ ज्येष्ठादिदोहदं शार्दूलविक्रीडितेनाह कौर्ममिति ज्येष्ठायां कूर्मस्य कच्छपस्येदं कौर्मं मांसम् मूले सारिकायाः पक्षिण्याः इदं सारि
कं मांसं पूर्वाषाढायां गौधायाः इदं गौधिकं मांसम् ॥ ॥ ॥ ॥ ॥ ॥

उत्तराषाढायांशल्लकंपपोसिंगाद्देशाल्यंमांसम् श्वावित्तुशल्यंइत्यमरः अभिजितिहविष्यंमुद्गादि श्रवणेकृसरान्नंखिचडिका धनिष्ठायांमुद्गान्नंमुद्गौद
नं शतभेयवान्नायवपिष्टम् पूर्वाभाद्रपदायांमत्स्यान्नंमत्स्यमिश्रितमोदनम् उत्तराभाद्रपदायां चित्रान्नंवर्णमोदनम् रेवत्यांदध्यन्नंदधिभक्तमिति नारद
कुल्माषांश्चतिलान्माषान्दधिमध्वघृतंपयः मृगमांसंचसारंपायसंचाषिकंमृगं शशमांसंचषाष्टिकंचप्रियंगुकमपूपकम् चित्राण्डजान्फलंकूर्मंसारीगोधां
चशल्यकम् हविष्यंकृसरान्नंचमुद्गान्नंयवपिष्टकं मत्स्यान्नंचित्रितान्नंचदध्यन्नंरस्त्रभात्क्रमादितिगुरुः अलभ्यालभ्यभक्ष्याणामेतेषामथतान्त्रजे
त् रक्षासिद्धिमाप्नोतिदृष्टमात्रितुभूपतिः दोहदेषुप्रयातेषुदलतत्रविकल्पोज्ञेयः ८५ अथदिग्दोहदमनुष्टुभाह आज्यमिति आज्यंघृतपूर्वस्याम्

मत्स्यान्नंखलुचित्रितान्नमथवादध्यान्नमेवंक्रमाद्भक्ष्याभक्ष्यमिदंविचार्यमतिमान्भक्षयेत्तथालोकयेत् ८५ आज्यं
तिलोदनंमत्स्यंपयश्चापियथाक्रमम् भक्षयेद्दोहदंदिश्यमाशांपूर्वादिकांव्रजेत् ८६ रसालांपायसंकांजीशृतंदुग्धंत
थादधि पयोघृतंतिलान्नंचभक्षयेद्वारदोहदम् ८७ पसादितोर्कदलतंडुलवारिसर्पिः श्वाणाहविष्यमपिहेमजलंत्व

तिलमिश्रमोदनंदाक्षिणस्यांमत्स्यंपश्चिमायांपयोदुग्धमुत्तरस्यांदिशिभवंदिश्यंएतद्दोहदंभक्षयेत् ततःपूर्वाद्याशांव्रजेत् ८६ अपूपम्
वारदोहदमनुष्टुभाह रसालामिति रसालाशर्करादधिमरीचकर्पूरैलासंसृष्टालोके शिखरिणीतिप्रसिद्धातांरविवारेपायसंसोमेकांजीमंगले शृतंमौ
मेश्रितंपक्वंदुग्धंबुधेदधिगुरौ अश्रितंअपक्वंदुग्धंशुक्रेतिलमिश्रमोदनंशनिवारेएतद्वारदोहदंरविवारादिक्रमेणभक्षयेत् स्यात् रसालातुमा
र्जिनीत्यमरः ८७ अथतिथिदोहदंवसंततिलकेनाह पसादितइति पसादितः प्रतिपदमारभ्यपंचदशतिथिषुक्रमेणतिथिदोहदंभुक्त्वाव्रजेत् यथा
प्रतिपदिअर्कस्यप्रसिद्धस्यदलानिपर्णानिद्वितीयायांतंडुलवारिप्रशालितंतंडुलजलम् तृतीयायांसर्पिर्घृतम् चतुर्थ्यांश्राणायवागूःपंचम्यांहविष्यंमु

प्रस्थानं प्रतिपत्तेत एतान्यत्र शनैर्वयं स्वदेवसदनाद्यपि दशाभिप्रस्थितो हतवत्तिवसिष्ठोक्तेः गंतव्यदिक्स्थितितर्हीपि प्रस्थानं प्रयतेन सावधानेन राज्ञां गत
व्यदिक्प्रस्थाने दिग्गमनं चिकीर्षितं तद्दिगभिमुखं कार्यम् गंतव्यदेशाभिमुखमेव देशे प्रस्थानमाहुः शुभदं नराणामिति राजमार्त्तंडोक्तेः १४ अथान्यद
पि प्रस्थाने भूमिपालइति भूमिपालो राजा प्रस्थाने दश दिवसमभिव्याप्य दशाहोरात्राणि न वसेत सामंतो मांडलिकाश्चतुर्हारिकः एकत्र प्रस्थानि
सप्तरात्रं न वसेत् तदितरः मनुजो ब्राह्मणादिस्तथैव एकत्र प्रस्थाने पंचरात्रं न वसेत यदि वा वसेत् तदा किं कुर्यादित्यत आह ऊर्ध्वमिति अवधिदिवसानि
क्रमानंतरं पुनर्गृहमागत्य शुभाहे शेषिकप्रकारेण विचारिते शुभदिवसे गच्छेत् इति विशेषेण प्रस्थाने दिवसनियमो भिहितः राजमार्त्तंडः याव्या
महानिमुनयः प्रवदंति सप्तयाम्ये मतीव शुभदानि दिनानि पंच त्रीण्येव पश्चिमदिशि क्षितिनायकानां प्रस्थानकेषु दिवसद्वयमुत्तरस्यामिति अथप्र

संप्रस्थितो यदि गृहं मंदिरं ततः प्रयातो गंतव्यदिक्स्थितदपि प्रयतेन कार्य्यम् १४ प्रस्थाने भूमिपालो दशदिवसमभिव्याप्यनै
कत्र तिष्ठेत्सामंतः सप्तरात्रं तदितरमनुजः पंचरात्रं तथैव ऊर्ध्वं गच्छेत्तु भाद्दे प्रथगमनदिनात्सप्तरात्राणि पूर्वं वा शक्तो
तद्दिने सो रिपुजयमना मैथुनं नैव कुर्यात् १५॥ स्थानकर्तुर्नियममाह अथेति असौ राजादिः रिपुविजयमनाः शत्रुजये कृतनांतःक
रणो यात्रादिनात्पूर्वं सप्तरात्राणि मैथुनं संभोगं नैव कुर्यात् च्यवनः त्रिरात्रं वर्जयेत्क्षीरं पंचाहं क्षुरकर्म च तद्दहश्चावशेषाणि सप्ताहं मैथुनं त्यजेद् वा अ
थवा अशक्तो सप्ताह मतिकामितयास्थातुमशक्तो तद्दिने यात्रादिवसे मैथुनं नैव कुर्यात् गर्गः यात्राकाले तु संप्राप्ते मैथुनं यो निषेवते रोगार्तः क्षीणके
शश्च स निवर्त्तेत वाहवे किंभूता तु प्रथमदिने स्त्री ऋतुस्नाता भवति गमने चावश्यकता तत्र निर्णयमाह च्यवनः आत्ययिककार्ये पतेत्पुष्पस्नाता समा
गमं गत्वा मुदितो गच्छेत्लभते मनोरथान् चिरकालेनेति यदा पुनर्गमनार्थं कालांतरमस्ति तद्दिने मैथुनं कृत्वा कालांतरे सल्लग्ने यायादित्यर्थसिद्ध
मू० १५॥

मार्गादिभीस्सगर्भग्रहणकालस्तत्रवृष्टिरावश्यकी यदाह वराहः पवनसलिलविद्युत् गर्जिताभ्रान्वितोयः सभवतिबहुतोयः पंचरूपस्तुमेघइति ततश्च ग
र्भग्रहणयोग्योऽल्पावृष्टिनैदोषस्स महतीवृष्टिस्तु गर्भगलनं यतोवाराहेणोक्तं गर्भसमयेऽतिवृष्टिर्गर्भाभावायनिमित्तकृतेति निमित्तकृत्कालात्रिकं सावि
वर्तिः विद्युतिरूपधीयमानादोषमुपधिनुयात् एतामहावृष्टेरेवदोषवत्वं अतएवमृशंसरंतोजलदानशस्तादितिबृहद्यात्रायामुक्तं तस्मादल्पायामकाल
वृष्टौदोषाभावः अल्पायांत्वल्पदोषः महत्यांतुमहान्दोषइति सप्तघातरात्रिकादित्युक्तम् प्राकृ एकेनैकमहः प्रोक्तं द्वितीयेनत्रिरात्रकं तृतीयेनतुपंचाहं दश
रात्रमतः परम् पौषेतुत्रिदिनंवर्ज्यंमाघमासेदिनद्वयं फाल्गुनेदिनमेकंतुचैत्रेतुघटिकाद्वयमितितु आवश्यककार्यविषयम् १८ पूर्वोक्तमेवार्थंस्पष्टीकु
र्वन्नावश्यकयात्रायांतच्छांतिकंदुष्टशाकुनशांतिंचातिशाक्वर्यामाथाछंदसाह अल्पायामितिस्पष्टार्थः प्रथमचरणम् अतोयपस्त्राच्याः पठंति तावस्त्रयाणां

पक्षमर्त्यपदांकितानयावंद्रसुधास्यान्नहितावदेवदोषः १८ अल्पायांवृष्टौदोषोल्पोभूयस्यांदोषोभूयान्जीमूतानांनिर्घोषेवृ
ष्टौवाजातायांभूयः सूर्येंदोर्बिंबेसौवर्णेकृत्वाविप्रेभ्योदद्यात् दुःशाकुन्येसाज्यंस्वर्णंदत्वागच्छेत्स्वेच्छाभिः १९ विप्रा
श्शुभफलान्नदुग्धदधिगोसिद्धार्थपद्मांबरवेश्यावाद्यमयूरचाषनकुलाबध्वैकपश्वामिषम्॥ ७ ॥ ॥

दिषुभूपतीनामकालवृष्टिः प्रकरोतिदोषम् यावद्भुवंतंचरंतोजनंगांतथापशूनांचरणाङ्कितांभूरितितन्निर्मूलत्वादुपेक्ष्यम् स्वयंप्रस्थानेसति
मार्गमध्येनास्त्ययंदोषः आवश्यकयात्रायांदानमाह जीमूतानामिति जीमूतानांमेघानांनिर्घोषशब्दे अकालवृष्टौवाजातायांसूर्येंदोर्यथाशक्त्या
सौवर्णनिर्मितेबिंबेकृत्वाब्राह्मणेभ्योदद्यात्ततः स्वेच्छयागच्छेत् प्रसंगाद्दुष्टशकुनानांदानमाह दुःशाकुन्य इति शकुनस्यभावःशाकुन्यंदुष्टंचतच्छा
कुन्यंचदुःशाकुन्यंतस्मिन्दुष्टशकुनप्रस्थानकालेसंभूतेसतिसाज्यंसघृतंस्वर्णंविप्रेभ्योदत्वास्वेच्छाभिर्गच्छेत् १९ अथशुभसूचकशकुनान्शार्दूल
विक्रीडितेनाह विप्राश्चेति विप्राबहवोद्वौवानत्वेकः अश्वःप्रसिद्धः॥ ॥ ॥ ॥ ॥ ॥

प्रौढानां स्रग्भगानां वा दर्शनं सर्वकामदम् षष्ठे तृतीये कर्माये भौमश्चेत्तत्फलं भवेत् दास्यो वेश्याः स्त्रामांसलाभश्चैवस्त निश्चितः सप्ताष्टपंचमे यस्य जीवो लोवा त्ववर्तते आदर्शश्च लाभदः राहुर्भौमश्च मंदश्च लग्नाद्यद्वितीयगः उद्धृतं मोमयेपश्येच्छीघ्रं लाभं धनं दिशेत् इत्यादयः शकुनाः शकुनग्रंथेभ्यो ज्ञेया विस्तरभयादिह नोक्ताः १०१ अथापशकुनान् शार्दूलविक्रीडितेनाह वंध्येति वंध्या प्रसिद्धा चर्म प्रसिद्धं तुषं धान्यादितुषं अस्थिसर्पलवणानि प्रसिद्धानि अंगारो निर्धूमोऽग्निपिंडः इंधनं पाकयोग्यं क्लीबः षण्ढः विट् उद्धृता विष्ठा अस्त्री विष्ठा विड्वौ समावित्यमरः तैलं प्रसिद्धम् उन्मत्तो मद्यभूताद्यावेशवान् वसा शरीरांतर्धातुविशेषः औषधं प्रसिद्धम् अरिः शत्रुः जटिलो जटावान् प्रव्राट् संन्यासी तृणं प्रसिद्धं व्याधितो चिकित्स्य व्याधिमान् नग्नः अपरिहितवस्त्रः कु

भारद्वाजनृपानवैरनिनदा मांगल्यगीतांकुशा दृष्टाः सत्फलदाः प्रयाणसमयेऽपि कोऽपि घटः स्वानुगः १०१ वंध्या चर्म तुषास्थि सर्पलवणांगारेंधनक्लीबविट्तैलोन्मत्तवसौषधारिजटिलप्रव्राट्तृणव्याधिताः नग्नाभ्यक्तविमुक्तकेशपतिताव्यंगक्षुधार्त्ता असृक्स्त्रीपुष्पं सरटः स्वगेहदहनं मार्जारयुद्धं क्षुतम् १०२ कषायी गुडतक्रपंकविधवाकुब्जाः कुटुंबे कलिर्वस्त्रादेः स्खलनं लुलायसमरं कृष्णानि धान्यानि च॥

((भारव्यतिरिक्तः अभ्यक्तः कृततैलाभ्यंगोऽस्नातः विमुक्तकेशः असंयतकेशः पतितो मद्यपानाद्यभिशापवान् व्यंगः छिन्ननासिकादिः क्षुधार्त्तः क्षुत्पीडितः असृक् रुधिरं स्त्रीपुष्पं ऋतुः शरटः कृकलासः स्वगेहदहनं स्वगेहेऽग्निदाहः मार्जारयुद्धं प्रसिद्धं क्षुतं छिंका १०२ अन्यदपि शार्दूलविक्रीडितेनाह कषायीति कषायो रागविशेषः तेन रक्तं वस्त्रं काषायं तद्वान् गुडतक्रे प्रसिद्धे पंकः कर्दमः विधवाकुब्जौ प्रसिद्धौ कुटुंबे कलिः पुत्रादिभिः कलहः वस्त्रादेः आदिशब्देन कमंडलुछत्रादेः स्खलनं निर्मितं हस्तात्पतनम् लुलाया महिषास्तेषां समरं युद्धम् कृष्णवर्णानि धान्यानि माषादीनि कार्पासं तुलं वमनं वांतम् दक्षिणभागे गर्दभः शब्दः अतिरुतः क्रोधाधिक्यम् गर्भिणी गर्भवती मुंडो मुंडितशिरस्कः आर्द्रांबर आर्द्रवस्त्रः दुर्वचः स्वमुखोत्थं परमुखोत्थं वा दुष्टवाक्यम्॥ छ ॥ ६ ॥ छ ॥

मु०टी० अंधबधिरौ प्रसिद्धौ उदक्या रजस्वला स्त्री एते पदार्था गन्तुः पुंसः यानसमये दृष्टाः संतो न शुभाः किंतु अशुभफलाः नारदः सर्वदिक्षु क्षुतं नेष्टं मोक्षं तं मत्र
या०त्र० णप्रदम् अफलं तक्क्षुतं वा कफवद्ध पीनसकैतवैरिति औषधेयानमारोहे विवादे शयने ऽशने विद्यारंभे वीजवापे क्षुतं सप्तमं शोभनमिति १०३ अथा
१०६ न्यच्च कुनं शार्दूलविक्रीडितेनाह गोधाजाहकेति गोधा प्राणिविशेषः तः गोह इति भाषया जाहका गात्रसंकोची प्राणिविशेषः सूकरः प्रसिद्धः अहिः स
र्पः शशकः प्रसिद्धः यानसमये एषां गोधादीनां कीर्तनं स्वमुखेनान्यमुखेन वोच्चारणं शुभम् न च पुनरेतेषां गोधादीनां शब्दो रुतं अथवा विलोकनं दर्शनं नि
षिद्धं कपिऋक्षाणां कपीनां वानराणां ऋक्षाणां भल्लूकादीनामुतो गोधादिभ्यो व्यस्तयो ज्ञेयः यथा वानराणां भल्लुकानां कीर्त्तनं निषिद्धं तेषामेव दर्शनं शब्दि

कार्पासं वमनं च गर्दभरवो दक्षे ऽतिरुद्गर्भिणी मुण्डार्द्राम्बरदुर्वचों ऽधबधिरो दक्यानदृष्टा ऽशुभाः १०३ गोधाजाहकसूक
राहिशशकानां कीर्तनं शोभनं नो शब्दो न विलोकनं च कपिऋक्षाणामतो व्यत्ययः नद्युत्तारभयप्रवेशसमरे नष्टार्थसंवी
क्षणे व्यस्ताः शकुनाः नृपेक्षण विधौ यात्रोदिताः शोभनाः १०४ वामांगे कोकिलापल्लीपोतकी सूकरी रला पिंगलच्छु
छुका श्रेष्ठा शिवा पुरुषसंज्ञिता १०५

तं वा न निषिद्धं शुभमित्यर्थः नद्युत्तार इति नद्या गंगादेरुत्तारणे भये भयसंबंधिनी कार्ये पलाय
नादिके प्रवेशे गृहप्रवेशे समरे संग्रामे नष्टार्थस्य नष्टद्रव्यस्य संवीक्षणे गवेषणे प्रागुक्ताः शकुना व्यस्ता विपरीता ज्ञेयाः शुभशकुना विघ्नाश्चेत्यादयो
ऽशुभा इमा बंध्या चर्मेत्यादयः शुभशकुनाः शुभफलदा ज्ञेयाः नृपेति नृपदर्शनार्थं गमने यात्रायामुदिता विप्राश्चेत्यादयः शुभा ज्ञेयाः नृपावलोकने शकुनः
प्रयाणवदित्युक्तो राजदर्शनस्य भयस्थानत्वादपवादो ऽयम् १०४ अथान्यदप्यनुक्तमाह वामांगे इति कोकिला पल्ली प्रसिद्धौ पोतकी दुर्गेति सूकरी जात्य
कटिका रला पक्षिविशेषः पिंगला भैरवी छुछुका छुछुन्दरी शिवा सृगाली पुरुषसंज्ञिता पुंनाम्नः कपोत खंजन तित्तिरी हंसादयः एते गच्छतां राजादीनां राम:
वामांगे वामभागे शस्ताः स्युः १०५॥ १०५ ॥ १०५ ॥ १०५ ॥ ॐ ॥ १ ॥ १ ॥ १ ॥ १०६

अन्यदप्यनुष्टुभाह छिक्करइति छिक्करोमृगजातिः पिक्ककः पक्षिविशेषः भासः श्रीकण्ठः वानराः एतेप्रसिद्धाः रुरुर्मृगविशेषः स्त्रीसंज्ञकाः स्त्री
नामानोमृगपक्षिणः दक्षिणभागगाः शुभाः शेषाः प्रसिद्धाः १०६ अथोक्तव्यतिरिक्तानांमृगपक्षिणांसामान्यतः प्रादक्षिणेनशकुनमनुष्टुभाह प्रदक्षिणगा
नाइति उक्तव्यतिरिक्तामृगाः पक्षिणश्चयात्रायांप्रादक्षिण्येनगताश्चलिताः श्रेष्ठाः शुभफलदाः स्युः परंतु ओजामृगाविषमसंख्याःकिंपंचसप्तादयश्चेद्व
जंतोदशास्तदातिधन्याःस्युः वामेइति स्ववामभागेखरस्वनो गर्दभशब्दोतिधन्यः अथशकुनानांकिंचित्कालविशेषेनैर्वल्यमाह वाहः नग्राम्यारण्ये
यातोनारण्येग्रामसंस्थितः दिवाचरोनशर्वर्यानवनक्तंचरोदिवा द्वंद्वरोगार्दितत्रस्तकलहामिषकांक्षिणः आपगांतरितामत्तानग्राह्याःशकुनाःक्वचित् दो
हिताश्वानवालेयकुरंगोष्ट्रमृगाःशशाः निष्फलाःशिशिरेज्ञेयावसंतेकाककोकिलौ नतुभाद्रपदेग्राह्याःसूकराश्वखरादयः शरद्यासादगोक्रौंचाः श्रावणे

छिक्करःपिक्ककोभासःश्रीकंठोवानरोरुरुः स्त्रीसंज्ञकाःकाककंकसाश्वानःस्युर्दक्षिणाःशुभाः १०६ प्रदक्षिणगताः
श्रेष्ठायात्रायांमृगपक्षिणः ओजामृगाव्रजंतोतिधन्यावामेखरस्वनः १०७ आद्येऽपिशकुनेस्थित्वाप्राणानेकादशव्रजे
त् द्वितीयेषोडशप्राणांस्तृतीयेनक्वचिद्व्रजेत्॥

१ हस्तिवातकौ व्याघ्रसर्ववनरद्वीपिमहिषासबिलेशयाः हेमंतेनिःफलाज्ञेयाबालाःसर्वे
विमानुषाइतिप्रभग्नरुक्षद्रुमकंटकीषुश्मशानभस्मास्थितुषाकुलेषु प्राकारशून्यालयजर्जरीषु सोमोपिपापःशकुनःप्रकल्प्यः देवद्रुमेवाहरिवंश्म
येदुर्जनकालसर्पोवरांक्षिपेद्याग्रमुखेस्वभंगंवरंनरेहृग्निनिधिर्भुजाभ्यांनोल्लंघयेद्दुःशकुनंकदापि १०७ अथावश्यककार्येविरुद्धशकुनेजातेपरिहारमनु
नुष्टुभाहआद्यइति आवश्यककार्येविरुद्धशकुनेजातेएकादशप्राणान् स्थित्वाएकादशप्राणपरिच्छेद्यंकालंस्थित्वेत्यर्थः ततःसमीचीनेशकुनेव्रजेत्त
त्रापिविरुद्धशकुनेसंजातेषोडशसंख्याकान्प्राणान्स्थित्वाशुभशकुनेव्रजेत् तत्रापिपुनस्तृतीयेविरुद्धशकुनेसंजातेतुक्वचिदपिनव्रजेत् किंतुस्वगृहं
गच्छेत् दशगुर्वक्षरैःप्राणइतिकश्यपेनतुप्राणायामत्रयमेवप्रतीक्षमित्युक्तम् यायीविरुद्धशकुनमादौदृष्ट्वाप्रयत्नतः प्राणायामत्रयंकुर्याद्द्वितीयेद्वि

अथयात्रानिवृत्तौगृहप्रवेशमुपजात्याह यात्रानिवृत्ताविति मृदुनि मित्रानुराधामृगरेवत्यः ध्रुवाणिरोहिण्युत्तरा श्रवणनिर्लघुभैः सहैर्यात्रानिवृत्तौ प्रवेशनंशुभंस्यात् क्षिप्रचरैर्नेष्यते अश्विनीपुष्यहस्ताभिजिद्भिः श्रवणधनिष्ठाशततारापुनर्वसुस्वातीभिश्चप्रवेशनेपुनरपिगमोयात्रास्यात् नस्थिरत्वा निमध्यमानि द्वीशाग्निनक्षत्रेषुप्रवेशेक्रमात्स्त्र्यादीनांनाशः यथा विशाखायांप्रवेशेस्त्रियानाशः कृत्तिकायांप्रवेशेगृहनाशोगृहदग्धंस्यात् दारुणभेमू लज्येष्ठार्द्राश्लेषासुप्रवेशेपुत्रस्यनाशः उग्रभेपूर्वात्रयभरणीमघासुप्रवेशेआत्मनःस्वस्यैवनाशोनाशःस्यादित्यर्थः लग्नादिविचारोगृहप्रवेशप्रकरणो क्तज्ञेयः अत्रैवविचार्यम् यत्रमासेयात्राकृतातन्मासान्नवमेमासियात्रादिनान्नवमेदिनेचप्रवेशोनविधेयः गुरुः निर्गमान्नवमेमासिप्रवेशोनैवशोभनः नवमेदिवसेचैवप्रवेशोनैवकारयेदिति ॥ अथविवाहप्रकरणोक्तदोषातिदेशंयात्रायुक्तदोषांश्चशिष्याणामविस्मरणार्थंमञ्जुभाषिण्याह अयनर्क्षेति

यात्रानिवृत्तौशुभदंप्रवेशनंमृदुध्रुवैःक्षिप्रचरैःपुनर्गमः द्वीशेऽनलेदारुणभेतथोग्रभेस्त्रीगेहपुत्रात्मविनाशनंक्रमात् १०९
अयनर्क्षमासतिथिकालवासरोद्भवशूलसंमुखसितज्ञदिक्कृपाः भृगुवक्रतादिपरिघारव्यदण्डकस्त्वृतुजाद्यशौचमपिचो ॥ ११०

एतेअयनशूलाद्योदोषाविवाहप्रकरणोक्तदोषाश्चयात्रायांनेष्टाः तत्रायनशूलः सौम्यायनेसूर्यविधूतदोमलमिति मार्गोद्भवःशूले द्विविधःग्रंथान्तरोक्तः चापादित्रित्रिसशिखर्केप्राच्यादिदिक्षुनगंतव्यमित्येकः कपाटकंटकादिश्वद्वितीयः स्वरोदये ग्रयत्रायोरपाद्यश्चपूर्वाशादिवृधे क्रमात् राशयोद्वादशैवंतुमेषाद्याःसृष्टिमार्गतः यत्रपूर्वादिकाष्ठायांवृषराश्यादिगोरविः सादिशास्तमिताज्ञेयाशिष्टाःशेषाःसदोहिताइति कपाटकंटकादि वैद्याकपाटपूर्वेनोज्ञेयंकार्त्तिकादित्रिकंतथा नभस्यतोवास्तुमधोस्केनकंटकइतिज्योतिषार्कवचनात् वसनशूलः नपूर्वदिशिशाक्रभेनविधुसौरिवा रेतथेतितिथिशूलःयोगिनी नवभूम्यइति संमुखसितज्ञादिक्कृपाः संमुखःशुक्रःसंमुखोबुधः संमुखोदिक्स्वामीललाटीभृगवक्रतादि आदिशब्दात्स्त्री गात्वास्तमितत्वबाल्यादिकं वक्रास्तनीचेत्युक्तं परिघाख्यादण्डःपूर्वादिक्षुचतुर्दिक्ष्वित्युक्तः ऋतुजाद्यशौचं स्वस्त्रीऋतुजंआर्त्तवस्नानकालपर्यंतं अशौचंज

अन्यदपिमंजुभाषिणीछंदसाह मृतपक्षेति मृतःपक्षःतमोभुक्ततारास्मृता विश्वसंख्यादित्याद्युक्तः रिक्तरवितर्कसंख्यकाः चतुर्थीनवमीचतुर्दशीद्वादशीषष्ठ्यस्तिथयः उपलक्षणत्वादष्टमीपूर्णिमामावास्याशुक्लप्रतिपदः सौरिभौमरविवाराः वामपृष्ठगविधुः अजवृषभमिथुनकुलीराद्यत्यादिजातकोक्तावामपृष्ठराशिगतः आडलोरेवर्भतोऽश्वमोक्षिनिरिति भ्रमणमप्यभिजित्यवस्कपंचकंधनिष्ठोत्तरार्द्धातंवनसप्तानि अपि त्रिमुहूर्तेश्चदक्षिणेवर्ज्यएतेपंचाग दोषाः १११ अथलग्नदोषानस्रग्धरयाह लग्नेइतिजन्मराशेर्जन्मलग्नाद्वाऽष्टमगृहे अहितर्क्षाच्छत्रुजन्मराशेर्लग्नाद्वाषष्ठम् जन्मलग्नंयात्रालग्नेनतदीशाः तेषांजन्मराशिजन्मलग्नाभ्यामष्टमभवनयोःस्वामिनः रिपुजन्मराशिजन्मलग्नाभ्यांषष्ठभवनयोःस्वामिनोवायात्रालग्ने कुंभमीनयोर्नवलवोनवांशोल

मृतपक्षरिक्तरवितर्कसंख्यकास्तिथयश्चसौरिरविभौमवासराः अपिवामपृष्ठगविधुस्तथाडलोवसुपंचकाभिजिदथापिदक्षिणे १११ लग्नेजन्मर्क्षतन्वोर्मृतिगृहमहितर्क्षाच्चषष्ठंतदीशावालग्नेकुंभमीनर्क्षनवलतनूचापिपृष्ठोदयंच पृष्ठाशामक्षसंस्थंदशमशनिरथोसप्तमेचापिकाव्यः केंद्रेवक्राश्चवक्रीग्रहदिवससविवाहोक्तदोषाश्चनेष्टाः ११२ ॥इतिमुहूर्तचिंतामणौयात्राप्रकरणंसमाप्तम् ११ ॥

ग्नंचं पृष्ठोदयागोजाश्विककिमिथुनाः सप्तमातिशास्याः पृष्ठोदयाविमिथुनाद्याद्युक्ताः पृष्ठाशासंस्थमक्षंगंतव्यदिग्विलोमलग्नं दशमेशनिः सप्तमेकाव्यःशुक्रः केंद्रे वक्राःवक्रिणोग्रहाः वक्रिग्रहवाराश्चएतेदोषाः विवाहोक्तदोषाः उत्पातान्सहपातदग्धतिथिभिरित्याद्युक्ताः तेसर्वेयात्रायांवर्ज्याः यत्रसप्तमशुक्रव्यतिरिक्तोजामित्रदोषोनास्तीतिज्ञेयम् ११२ ॥इतिश्रमिताक्षरायांयात्राप्रकरणंसमाप्तम् ११ अथवास्तुप्रकरणंव्याख्यायते गृहनिर्माणप्रयोजनंभविष्यपुराणे गृहस्थस्यक्रियाःसर्वानसिद्ध्यंतिगृहंविना एतस्तस्माद्गृहारंभप्रवेशसमयौब्रुवे गृहस्वस्ताकम् नसिध्यंतिनिफलाभवंतीत्यर्थः॥ छ ॥ २ ॥ छ ॥ २ ॥ छ ॥ २ ॥

इत्याद्यर्थमनस्यात्सोव्ययाम्मादिषुस्वस्यशुभाशुभं लाभालाभादिविचारं शार्दूलविक्रीडितेनाह यद्भमिति नामभातव्यावहारिकनामभात् व्यावहारि
कनामराशेर्वृश्चिकाख्यो यस्यग्रामादेर्मे यथा चरणाद्रिसंज्ञकोग्रामराशिः मीनाख्यः सचद्वितीयोनवमःपंचमः एकादशोसुमिादशमश्चस्या तदसौ ग्रामः
स्वस्यशुभःस्यात् अन्यथानशुभइत्यर्थः यथानीलकंठराशेर्वृश्चिकाख्यात्तसंचमोमीनराशिश्चरणाद्रेस्तश्चरणाद्रीनीलकंठस्यवासयोग्यःनामर्क्षे उक्तं
चअवनामराशेरेवग्राह्यः काकिण्यांवर्गशुद्धौचवादेद्यूतेस्वरोदये मंत्रेपुनर्भूवरणे नामराशेःप्रधानतइति अथग्रामात्मनोरुत्तमर्णाधमर्णत्वंचाह स्ववर्ग
इति वर्गास्तुअकचटतपयशवर्गाः स्वगेशमार्जारसिंहशुनां सर्पाखुमृगमावीनांनिजपंचमवैरिणामष्टौइत्युक्ता तत्रयस्यपुंसोयत्संख्याकोवर्गोगरुडादिस्त
द्वर्गसंख्यांद्विगुणंविधायपरस्यग्रामादेर्वर्गसंख्ययाढ्यांचकृत्वातैरष्टभिः शेषितमवशिष्टनाःपुंसःकाकिण्योज्ञेयाः एवंग्रामादेरपिवर्गसंख्यांद्विगुणीकृत्वा

यद्भं धंकस्तुतेशरदिग्भिवमसौग्रामःशुभोनामभात्स्ववर्गद्विगुणंविधायपरवर्गाढ्यंगजैःशोषितं काकिण्यस्त्वजयोश्चतद्वि
वरतोयस्याधिकाःसोर्थदोथद्वारंद्विजवैश्यशूद्रनृपराशीनांहितंपूर्वतः १ ॥

मस्यकाकिण्योभवति एवं अनयोःपुरुषग्रामयोःकाकिणीनांविवरायस्याधिकाअवशिष्यंतेसोर्थदःपरस्यलाभदः यथा नीलकंठस्यवर्गः सर्पःतत्सं
ख्या५ द्विगुणः१० चरणाद्रिवर्गः सिंहः ३ तत्संख्ययायुक्ता १३ गजभक्तावशेषं ५ नीलकंठस्यकाकिण्यः एवंग्रामवर्गसंख्या ३ द्विगुणा६ नीलकंठवर्गेण
संख्ययायुक्ताः ११ अष्टभक्ताशेषं ३ ग्रामस्यकाकिण्यः द्वयोरंतरशेषं २ नीलकंठस्याधिकुलेनरानलाद्धव्यहानिरित्यर्थः उक्तंच स्ववर्गद्विगुणीकृत्यपरव
र्गेनयोजयेत् अष्टभिस्तुहरेद्भागंयोधिकःसऋणीभवेदिति अथद्वारवेशनमाह अथेति द्विजादिराशीनांपुंसांक्रमेणपूर्वतःप्राच्यादिदिक्चतुष्टयेद्वारं
हितंयथा द्विजराशीनांकर्कवृश्चिकमीनानांपूर्वदिशि वैश्यराशीनांवृषकन्यामकराणांदक्षिणदिशि शूद्रराशीनांमिथुनतुलाकुंभानांपश्चिमदिशिनृपराशी

